## एतस्य अङ्कस्य विशेषाः

सम्पुटः - २१ नवम्बर् - २००३ सञ्चिका - ८



## अन्तरङ्गम्




**ग्राहकशुल्कम् -**
**अमेरिका-कनडादेशयोः कृते**
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -



**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal, **CHENNAI - 600 097**
E.mail : subscription@chandamama.org



**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



*संस्थापकौ* -
**चक्रपाणिः नागिरेड्डी च**

# सन्धयः - तदा इदानीं च

अस्यां सञ्चिकायां काचित् 'सन्धिः' इति कथा दृश्यते । एतस्य सम्पादकीयस्य पठनात् पूर्वं भवन्तः तां कथां पठन्तु कृपया । तस्यां कथायां रथारूढौ उभौ राजानौ कस्मिंश्चित् लघुनि मार्गे परस्परम् अभिमुखम् आगच्छतः । एकस्य गमनाय अपरेण प्रतिगन्तव्यम् ।

एषा कथा २५०० वर्षेभ्यः पूर्वं लिखिते 'बुद्धजातके' दृश्यते । समाना परिस्थितिः सद्यःकाले उद्भूता आसीत् ।

उभे वाहने लघुनि सेतौ परस्पराभिमुखम् आगते । तत्र च विभिन्नविभागस्य सर्वकारीयाधिकारिणौ आस्ताम् । केन मार्गः त्यक्तव्यः ? प्रश्नः तु कस्यापि विभागस्य सम्बद्धः न आसीत्, अपि तु मनोभूमिकासम्बद्धः । उभे अपि वाहने अभिमुखं स्थिते । कोऽपि वाहनस्वामी प्रतिगन्तुं, मार्गं त्यक्तुं वा न सिद्धः । तीक्ष्णानां वचसाम् आदानप्रदानं जातम् । एकगणीयाः स्वबलं प्रदर्शयन्तः अन्यम् अधिकारिणं बलात् नीतवन्तः । अन्यगणीयाः समीपस्थे आरक्षकालये अधिकारी 'अपहृतः' इति अभियोगं कृतवन्तः ।

अग्रे किं जातमिति विषयः न मुख्यः अत्र । प्रायः ज्येष्ठाः अधिकारिणः मध्ये प्रविश्य अहङ्कारहेतुकस्य घर्षणस्य स्थगनं कृतवन्तः स्युः । प्रश्नः तदपेक्षया मूलभूतः अस्ति ।

कथायां दर्शितायाः पुरातनपृष्ठभूमिकातः वयं सौहार्दसहनादिषु विषयेषु कियता प्रमाणेन प्रगतिं साधितवन्तः इत्येव प्रश्नः । अस्य प्रश्नस्य अवलोकनमेव अत्र प्रामुख्यम् आवहति ।

---

*सम्पादकः* - **विश्वम्**





# रक्ष्यतां जलम्

जलं जीवनस्य सञ्जीविनी अस्ति । परन्तु कोऽपि एतस्य उपयोगं जागरूकतया न करोति । सर्वे मन्यन्ते यत् वयं स्वतन्त्राः इति । अवलोकनात् एतत् ऊहितमस्ति यत् अग्रिमे २०२५ तमवर्षात्मके काले भूमेः जलसौलभ्यं ५०% न्यूनं भवेत् इति । भूमेः जलसम्पदम् अधिकं कर्तुम् अस्माभिः न शक्यते । उपयोगरीतेः परिवर्तनं तु अस्माभिः कर्तुं शक्यते एव । जलस्य विषये, तस्य रक्षणविषये च केचन वास्तविकांशाः अधः दत्ताः सन्ति ।

## जलम् अधिकृत्य वास्तवांशाः


भूमौ या जलसम्पत्तिः अस्ति तत्र द्विप्रतिशतमात्रं शुद्धजलम् अस्ति ।


१०तः ३० लीटर्परिमितं शुद्धं जलं प्रतिदिनं शौचालयार्थम् उपयुज्यते ।


प्रतिव्यक्ति १० चषकपरिमितं जलं पानार्थम् आवश्यकम् ।



गृहकार्येषु स्नानार्थम् अत्यधिकस्य जलस्य उपयोगः क्रियते । सामान्यतः दश-निमेषाणां स्नानार्थं १८० तः २५० लीटर्परिमितं जलम् उपयुज्यते ।

वस्त्रक्षालनयन्त्रम् एकवारं यदि प्रवर्तनीयं तर्हि १०० तः १५० लीटर्-परिमितं जलम् अपेक्षितम् ।



चतुर्भिः युक्तस्य कुटुम्बस्य कृते प्रतिदिनं सामान्यतः ५० लीटर्परिमितं जलम् आवश्यकम् ।

एकलीटरपरिमितं व्यर्थजलं सामान्यतः अष्टलीटर्परिमितं शुद्धजलम् अशुद्धं करोति ।

दोषपूर्णनलिकातः प्रतिदिनं प्रायः ३८० लीटर्परिमितं जलं व्यर्थं भवति ।

# जलस्य रक्षणं कथम् ?

**व्यर्थजलगमनं स्थगयन्तु ।** दन्तधावनसमये नलिकातः जलं यथा गच्छत् भवेत् तथा करणस्य दुरभ्यासः अस्मासु दृश्यते । कलशे जलं संस्थाप्य दन्तधावनस्य अभ्यासकरणात् वयं प्रतिदिनं बहुप्रमाणकं जलं रक्षितुं शक्नुयाम !

**जलस्रावं निवारयन्तु ।** 'बिन्दुशः' जलस्रावः इति यत् उच्यते तत् सर्वथा उपेक्ष्यं न । प्रत्येकस्मात् अपि जलस्रावात् प्रायः ३५ लीटर्परिमितं जलं प्रतिदिनं व्यर्थं भवति । नष्टस्य उपकरणस्य काले काले परिवर्तनात् एतत् निवारयितुं शक्यम् ।



यदा यन्त्रं वस्त्रैः पूर्णं भवति तदा एव वस्त्रक्षालनयन्त्रस्य उपयोगं कुर्वन्तु ।



कार्यानस्य क्षालनाय द्रोणीतः जलं स्वीकुर्वन्तु, न तु यन्त्रसाहाय्येन ।



केषाञ्चन जनानां दृष्ट्या प्रपञ्चः मोदजनकं स्थानं न । यै जनैः पानजलं दशाधिककिलोमीटर्दूरतः आनेतव्यं भवति तेषां दृष्ट्या जगतः केन्द्रबिन्धुः जलमेव, नान्यत् किञ्चित् । भारते जुलै-अगस्ट्-मासौ जलमासौ इति परिगण्येते । तदा जलरक्षणविधिविषये तस्य मौल्यादिविषयेषु च जनेषु जागरणम् आनेतुं प्रयत्नः प्रचलति । सर्वकारः तु शासनदृष्ट्या मितव्ययस्य मार्गोपायान् सूचयेत् । परन्तु तस्य कार्यान्वयः तु जनान् एव अवलम्बते । जलस्य रक्षणविषये प्रतिदिनं पदमेकं वा स्थाप्यताम् । यद्यपि एतत् कनिष्ठतमं स्यात्, तथापि तत् महत्त्वपूर्णम् एव । एकैकस्यापि बिन्दोः मौल्यं विद्यते । एकैकोऽपि बिन्दुः एकैकस्य भागधेयस्य निर्माणाय अपि स्यात् कदाचित् । अतः भवन्तः स्वस्य पोषकान् मित्राणि प्रतिवेशिनः च सूचयन्तु यत् सर्वदा नलिका स्थगिता भवेत्, जलं च संरक्षितं भवेत् इति ।



चन्दमामा



# मायासरोवरः

## २०

*[मायासरोवरेश्वरः आत्मना सह जयशीलं नयन् अस्ति इति सिद्धसाधकेन यदा ज्ञातं तदा तस्य रक्षणाय सः निर्गतः । तदवसरे तेन जलवृकराक्षसानां वार्ता ज्ञाता । राजा कनकाक्षः अपि साहाय्याय प्रस्थितवान् । जलवृकराक्षसैः सह युद्धं कुर्वन्तः देवशर्मादयः ताभ्यां दृष्टाः । तदनन्तरम् ....]*

नरभक्षकाः स्वबुभुक्षानिवारणाय जलवृकराक्षसानां ग्रहणाय प्रयतमानाः आसन् । ते एतत् तु न ज्ञातवन्तः यत् जलवृकराक्षसाः कुत्र नयन्तः सन्ति इति । उभौ जलवृकराक्षसौ कञ्चित् महावृक्षम् आरुह्य दूरात् एतत्सर्वं परिशीलयन्तौ आस्ताम् ।

तौ स्वस्य राज्ञः आदेशस्य अनुगुणं प्रातःकालतः तत्र स्थित्वा शत्रूणां चलनवलनादिकस्य परिशीलने मग्नौ आस्ताम् ।

वृक्षस्थयोः तयोः अन्यतरः स्वसहचरम् अवदत् - ''अस्माकं राजा शत्रुपक्षस्य सामर्थ्यं सम्यक् न जानाति । इतः पूर्वं सरोवरे प्रवृत्ते युद्धे वयं मायासरोवरीयान् सैनिकान् सम्यक् पीडयितुं शक्ताः जाताः । किन्तु इदानीं तेषां साहाय्यार्थम् अन्ये बहवः आगच्छन्तः दृश्यन्ते । इदानीं किं करणीयम् अस्माभिः ?'' इति ।

किन्तु अपरस्य जलवृकराक्षसस्य



अवधानं तु एतस्य श्रवणे न आसीत् । माया-सरोवरस्य दिशि धावतः स्वजाति-बान्धवान्, तान् अनुसरतः नरभक्षकान् च निर्निमेषं पश्यन् आसीत् सः ।

तेषां पृष्ठतः खञ्जन्तं गच्छन्तं हिरण्यपुरीयं सेनापतिपुत्रं मङ्गलवर्माणं महता आश्चर्येण पश्यन् आसीत् सः ।

सः मङ्गलवर्माणं दर्शयन् अपरम् अवदत् – ''भोः, एतं खञ्जन्तं गृहीत्वा यदि वयं राजसमीपं नयेम तर्हि वरं स्यात् खलु ? एतस्य मुखात् शत्रुरहस्यं ज्ञातुं शक्येत । इदानीम् अरण्यं प्रति यः राजा आगतः तस्य सेना कियती इति एतस्य मुखात् ज्ञातुं शक्येत'' इति ।

''तत् तु युक्तम् । किन्तु द्विधा विभज्य मायासरोवरं प्रति गच्छतां शत्रूणां गति-विधयः अस्माभिः अवश्यं परिशीलनीयाः खलु ?'' इति अवदत् अपरः जलवृकः ।

''एतत् कार्यं भवान् निर्वहतु । ते मायासरोवरं प्रति गच्छन्तः सन्ति । अत्र अज्ञातं रहस्यं किमपि नास्ति । अत तु तं खञ्जं स्कन्धे आरोप्य नीत्वा महाराजस्य पुरतः उपस्थापयिष्यामि'' इति उक्त्वा सः जलवृकः वृक्षात् अवतीर्य मङ्गलवर्माणम् अनुसृतवान् ।

मङ्गलवर्मा एतां विपत्तिं न लक्षितवान् एव । पदातयः अश्वारोहिणः च तं विस्मृत्य अग्रे गतवन्तः आसन् इत्यतः तेषाम् अनुसरणे दत्तावधानः आसीत् सः । 'शीघ्रं मायासरोवरं प्राप्य तत्र जलवृकैः सह प्रचलिष्यमाणे युद्धे मया अपि भागः ग्रहीतव्यः । वीरतायाः निर्णयः खड्गेन न भवति, प्रत्युत साहसप्रवृत्त्या भवति' इति चिन्तयति स्म सः ।

मङ्गलवर्मा चिन्तनं कुर्वन् अग्रे गच्छन् आसीत् । तावता पृष्ठभागे कश्चन पादध्वनिः श्रुतः । सः मुखं परिवृत्य पृष्ठतः अपश्यत् । जलवृकः तं झटिति ग्रहीतुम् उद्युक्तः । किन्तु तावता तस्य पादः कस्मिंश्चित् गर्ते अपतत् । तस्मात् तदीया हस्तस्था गदा दूरे अपतत् । तां ग्रहीतुं प्रयत्नः यदा तेन आरब्धः तदवसरे पादस्य अस्थ्नः व्यावर्तनं जातम् ।

जलवृकः वेदनां सोढुम् अशक्नुवन् उच्चैः आक्रोशनम् अकरोत् – ''हे जलवृक-नाथ ! रक्ष माम्'' इति ।

मङ्गलवर्मा अपायात् रक्षितः जातः । सः जलवृकसमीपं गत्वा उच्चस्वरेण अवदत् – ''अये, भवान् मां ग्रहीतुं प्रयत्नं कृत्वा



अस्थिव्यावर्तनं प्राप्तवान् । योग्यः दण्डः प्राप्तः अस्ति भवता । इदानीं भवतः चिकित्सायाः आवश्यकता अस्ति । कुत्रापि तिष्ठन् भवतः जलवृकराजः किं भवन्तं रक्षेत् ? इतः पूर्वं भवदीयाः जलवृकराक्षसाः सरोवरेश्वरस्य भवनम् आक्रान्तवन्तः आसन् खलु ? तत्र केन जयः प्राप्तः ? यदि भवान् सत्यं वदिष्यति तर्हि सञ्जीवनीसदृशेन सस्येन चिकित्सां कृत्वा भवान् चलनसमर्थः यथा भवेत् तथा करिष्यामि'' इति ।

एतस्य उत्तररूपेण जलवृकः किमपि वक्तुं यावत् उद्युक्तः तावता वृक्षस्थः अपरः जलवृकः वृक्षात् अवतीर्य गदाम् उन्नीय आगच्छन् उच्चस्वरेण अवदत् - ''अये मायासरोवरेश्वरसेवक ! एषः अहम् इदानीं क्षणाभ्यन्तरे भवन्तं यमसदनं प्रति प्रेषयिष्यामि'' इति ।

मङ्गलवर्मा अपायस्य आगमनम् अवगच्छन् हस्तस्थस्य दण्डस्य अग्रभागतः एकं तीक्ष्णं शूलं बहिः आनीतवान् । तस्य अग्रभागं पादभङ्गं प्राप्तवतः जलवृकस्य कण्ठसमीपे गृह्णन् आगच्छन्तं जलवृकम् उद्दिश्य सः अवदत् - ''अये दुष्ट ! यावत् अहम् एकं, द्वे, त्रीणि इति कथयिष्यामि ततः पूर्वम् एव भवता गदां क्षिप्त्वा जानुभ्याम् उपविश्य जानुभ्याम् एव चलता मत्समीपम् आगन्तव्यम् । यदि एवं न क्रियते तर्हि भवतः मित्रस्य एतस्य मुण्डं रुण्डात् पृथग्भविष्यति । तदनन्तरं भवता अपि यमसदनं गन्तव्यं भविष्यति । शृणोतु । एकं.... द्वे....''

मङ्गलवर्मणः मुखात् 'त्रीणि' इत्येतस्य निर्गमनात् पूर्वम् एव सः जलवृकः गदां क्षिप्त्वा जानुभ्याम् उपविशन् - ''अहं भवतः अधीनः जातः अस्मि । भवता यथा उच्यते तथा श्रोतुम् अहं सिद्धः अस्मि अपि । मम मित्रं मा मारयतु कृपया'' इति दैन्येन प्रार्थितवान् ।

''अये जलवृकाधम ! भवतः मैत्री प्रशंसार्हा अस्ति । मया सह आगच्छतु तावत् । औषधपत्रं दर्शयिष्यामि भवते'' इति उक्त्वा मङ्गलवर्मा समीपस्थस्य गुल्मस्य दिशि गतवान् ।

इतस्ततः अन्विष्य कानिचन पर्णानि प्राप्य उत्पाट्य मर्दयित्वा एकं पर्णगोलकं निर्माय जलवृकाय यच्छन् सः अवदत् - ''एतस्य रसेन भवतः मित्रस्य पादं लिम्पतु । ततः एकां पट्टिकां बध्नातु । द्वादश घण्टाः यावत् भवतः मित्रेण पादसञ्चारः न



करणीयः । तथा कृतं चेत् पादः यथापूर्वं भविष्यति'' इति ।

'एतौ जलवृकराक्षसौ कस्यचित् विशेष-कार्यस्य निमित्तम् अत्र आगतौ स्तः । तत् कार्यं किम् इति न वदतः एतौ' इति चिन्तयन् मङ्गलवर्मा अग्रे पदानि स्थापितवान् । सः मायासरोवरं प्रति गमनाय निकटतरं मार्गं जानाति स्म । किन्तु खञ्जनपुरस्सरम् अपरिष्कृते मार्गे गमनं क्लेशाय आसीत् तस्य ।

सः खञ्जन् एव किञ्चिद्दूरं यदा गतवान् तदा कस्यचित् वृक्षस्य ऊर्ध्वभागतः आह्वानं श्रुतं - ''मङ्गलवर्मन् !'' इति ।

''किं कोऽपि वृक्षवासी पिशाचः माम् आह्वयति ?'' इति चिन्तयन् सः शिरः उन्नीय दृष्टवान् ।

कस्मिंश्चित् वृक्षे प्रसृतायाः वन्यलतायाः जाले निर्बद्धः कोऽपि जनः तेन दूरात् दृष्टः । सः आसीत् मायासरोवरेश्वरस्य रथस्य सारथिः । यदा हंसरथः अधोमुखः जातः तदा तस्मात् पतितः सः एतस्मिन् लताजाले पतितः आसीत् । तस्मात् प्राणापायः कोऽपि न जातः आसीत् तस्य ।

''अहो ! भवान् सजीवं तिष्ठति ! महतः सन्तोषस्य विषयः एषः । ततः अधः आगमनाय किं भवता शाखासाहाय्यं किमपि न प्राप्तम् ?'' इति उच्चस्वरेण पृष्टवान् मङ्गलवर्मा ।

हंसरथस्य सारथिः अवदत् - ''मङ्गल-वर्मन् ! मन्दस्वरेण वदतु । यमदूतसदृशः कश्चन जनः नरवानरम् आरुह्य इतः एव आगच्छन् अस्ति । अहं चिन्तयामि यत् सः अस्मच्छत्रुः सिद्धसाधकः एव स्यात् । तेन सह जयशीलः अपि अस्ति'' इति ।

''अये, इदानीं तौ अस्माकं शत्रू न । किन्तु तौ अस्माकं मित्रस्थाने स्तः वा न वा इति तु अहं स्पष्टतया न जानामि । तत्र स्थितेषु अस्माकं वैद्यदेवः अपि अस्ति । अहं खञ्जः अस्मि । अतः वृक्षम् आरोढुं न शक्नोमि । अतः उच्चैः करताडनशब्दं कुर्वन् तेषाम् अवधानम् आकर्षतु भवान् एव'' इति अवदत् मङ्गलवर्मा ।

नरवानरम् आरुह्य आगच्छता जनेन सह वैद्यदेवः अपि अस्ति इति ज्ञातवता सारथेः मनः प्रहृष्टम् । 'यदि अहम् अत्रैव इतोऽपि दीर्घकालं तिष्ठेयं तर्हि कोऽपि वन्यपशुः मां मारयेत् अपि' इति चिन्तयन् सारथिः अनतिदूरे एव गच्छतां सिद्धसाधक-कनकाक्षमहाराज-तदनुचराणाम् अवधानस्य

आकर्षणाय उच्चस्वरेण अवदत् - ''महाशयाः ! मां रक्षन्तु । अहं वृक्षस्थे लताजाले निबद्धः अस्मि'' इति ।

एषः स्वरः आदौ नरवानरेण श्रुतः । अतः सः गमनं स्थगयित्वा शिरः उन्नीय सिद्धसाधकं सूचितवान् । तावता हंसरथसारथिः पुनरपि उच्चैः उक्तवान् ।

एतदवसरे तस्य ध्वनिः अन्यैः अपि श्रुतः । तं श्रुत्वा देवशर्मा अवदत् - ''एषः स्वरः हंसरथस्य सारथेः इति भाति । सः रथात् एतस्मिन् एव स्थले पतितः आसीत् खलु ?'' इति ।

''तम् अहं ग्रहीष्यामि । तं ग्रहीष्यामि चेत् तत्स्वामिनः रहस्यं समग्रं ज्ञास्यते मया । जयशीलाय प्रदर्श्य तं महाकालाय बलिरूपेण अर्पयिष्यामि अपि'' इति वदन् सिद्धसाधकः नरवानरम् अग्रे गमनाय प्रेरितवान् ।

नरवानरः वेगेन अग्रे गत्वा रथसारथियुक्तस्य वृक्षस्य मूले अतिष्ठत् । तदा मङ्गलवर्मा अवदत् - ''सिद्धसाधकवर्य ! वृक्षस्थे लताजाले संलग्नः अस्मत्सहकारी कथमपि रक्षणीयः'' इति ।

'जय महाकाल' इति सकृत् उद्घोष्य सिद्धसाधकः अवदत् - ''किम् एतत् आश्चर्यम् ! मायासरोवरेश्वरः कनकाक्षराजस्य पुत्रयोः अपहरणं कृतवान् । इदानीं जयशीलम् अपि आत्मना सह नीतवान् अस्ति सः । किन्तु 'सः शत्रुः न' इति भावयन्तः इव वदन्तः सन्ति खलु भवन्तः !'' इति ।

तदा देवशर्मा सिद्धसाधकं समाश्वासयन् इव अवदत् - ''सिद्धसाधक ! इदानीं मायासरोवरेश्वरस्य अस्माकं च हानिं जनयितुं



समर्थाः शत्रवः सन्ति जलवृकराक्षसाः । वयं सर्वे सम्भूय यदि तेषां विनाशं न कुर्याम तर्हि कनकाक्षमहाराजस्य पुत्रौ रक्षितुं न शक्नुयाम । एतावता मायासरोवरः जलवृकराक्षसाधीनः जातः स्यादपि'' इति ।

अत्रान्तरे कनकाक्षमहाराजः सैनिकैः सह तत्र उपस्थितः ।

''महाशयाः ! मां रक्षन्तु कृपया । कश्चन घोरः अजगरः शाखायां सर्पन् मत्समीपम् आगच्छन् अस्ति । सः मम गिलने अपि समर्थः स्यात् एव । कृपया शीघ्रातिशीघ्रं मां रक्षन्तु'' इति हंसरथसारथिः पुनरपि उच्चैः आक्रन्दनपुरस्सरम् अवदत् ।

तदा सिद्धसाधकः हस्तसङ्केतेन सारथिं दर्शयन् आदिष्टवान् - ''हे नरवानर ! वृक्षे लताजाले संलग्नं तं रक्षित्वा अधः आनयतु'' इति ।

अनन्तरक्षणे एव नरवानरः विद्युद्वेगेन वृक्षम् आरुह्य सारथेः समीपं गच्छन्तम् अजगरम् एकेन हस्तेन गृहीत्वा अपरेण हस्तेन हंसरथसारथिं लताजालतः बहिः आनीतवान् । नरवानरं दृष्ट्वा सः रथसारथिः महत् भयं प्राप्तवान् आसीत् ।

सः एकां शाखां दृढतया गृहीत्वा अवदत् - ''मान्य ! इदानीम् अहम् अवतरणं कर्तुं शक्नोमि'' इति ।

एतदभ्यन्तरे एव जलवृकराक्षसानां कश्चन गणः शिलागदाम् उन्नीय भ्रामयन् - 'जलवृकनाथः जयतात्' इति उद्घोष्य तेषाम् उपरि अभिपतितवान् ।

जलवृकराक्षसेषु अन्यतमः महामृगस्य उपरि उपविष्टः आसीत् । सः वेगेन गदां चालयन् अनुचरान् आदिष्टवान् - ''अये शृण्वन्तु । अस्माकं शत्रुषु एकोऽपि सजीवं न धावेत्'' इति ।

वृक्षस्य शाखायां स्थितः नरवानरः एतत् दृष्टवान् । सः सकृत् उच्चैः गर्जनं कृतवान् । तेन समग्रम् अरण्यं प्रतिध्वनितं जातम् । ततः सः स्वहस्ते स्थितम् अजगरं कशाम् इव चालयन् महामृगस्य उपरि उपविष्टवतः जलवृकराक्षसस्य समीपं गतः आक्रमणाय ।

*- (अग्रिमे मासे समाप्तिः)*



## वेताल-कथा

# वज्रकङ्कणम्

त्रिविक्रमः स्वीकृतं कार्यं त्यक्तुम् अनिच्छन् पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! भवान् तु श्रान्तः न भवति, किन्तु भवन्तं बोधयन् अहं तु श्रान्तः अस्मि । भवान् राजा अस्ति । प्रजानां हितस्य चिन्तनं राज्ञः कर्तव्यम् । तत् विस्मृत्य भवान् किमर्थं श्मशानमार्गे एवम् अटति ? काञ्चित् सिद्धिं प्राप्तुं भवान् प्रयत्नं कुर्वन् स्यात् । भवतः प्रयत्नं प्रशंसितुं शब्दाः न सन्ति मम समीपे । लोके



बहवः अखण्डप्रयत्नं कुर्वन्ति भवान् इव एव । आदित्यः अपि तादृशः एव कश्चन युवकः आसीत् । स्वकार्यस्य सिद्ध्यर्थं सः बहूनि कष्टानि सोढवान्, विविधाः मानसिकव्यथाः च सम्मुखीकृतवान् । तथापि कार्यस्य फलं तु तेन न प्राप्तम् । तत्र कारणं - फलप्राप्तिसमये तेन कृतं निर्णय-परिवर्तनम् । मया इष्यते - आदित्येन इव भवता अपि न करणीयम् इति । तस्य कथां यदि विस्तरेण श्रावयेयं तर्हि भवति विवेकः उद्भवेत् । अतः मया श्राव्यमाणाम् आदित्यस्य कथां श्रद्धया शृणोतु । तेन भवतः मार्गायासः परिहृतः भवेत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

रत्नपुरनामके राज्ये वज्रपुरं नाम कश्चन ग्रामः । तत्र आदित्यः नाम युवकः वसति स्म । सः तीक्ष्णमतिः परिश्रमशीलः च । मातापित्रोः विषये महान् आदरः प्रीतिः च आसीत् तस्य । तदीयं क्षेत्रं न जलयुक्तम् । अतः परिश्रमेण सस्यं वर्धनीयं भवति स्म । यत् फलं क्षेत्रे प्राप्येत तदपि कदाचित् हस्तगतं न भवति स्म । पूर्वजैः अपि एतादृशम् एव जीवनं यापितम् आसीत् ।

यदि उत्तमा वृष्टिः भवति तर्हि एव क्षेत्रे उत्तमं फलं प्राप्यते स्म वज्रपुरे । फलोत्पत्तिः उत्तमा अस्ति चेदपि फलं हस्तगतं भवेत् एव इति नियमः तु न आसीत् । तत्र कारणं बाष्पधारानदी । सा ग्रामसमीपे एव प्रवहति स्म । सर्वदा शुष्का भवति स्म च । किन्तु कादाचित्कतया सा प्रवाहेण पूर्णा सती क्षेत्राणि नाशयति स्म । एवं तस्यां नद्यां महाप्रवाहः कदा भवति इति कोऽपि ऊहितुं न शक्नोति स्म ।

वज्रपुरीयाः ग्रामाधिकारिणः द्वारा महाराजं बहुधा निवेदितवन्तः आसन् यत् जलबन्धं निर्माय प्रवाहपीडातः वज्रपुरं रक्षणीयम् इति । राजप्रतिनिधयः अपि बहुवारं निवेदिताः आसन् । किन्तु दौर्भाग्य-वशात् वज्रपुरस्य एतस्याः समस्यायाः विषये न राजप्रतिनिधयः अवधानं दत्तवन्तः, न वा राजा । तत्रत्याः जनाः ग्रामं परित्यज्य अन्यत्र गन्तुं न इच्छन्ति स्म । अतः कदाचित् क्षामं, पुनः कदाचित् प्रवाहपीडां च अनुभवन्तः ते तत्रैव वसन्ति स्म ।

एतस्मिन् वर्षे उत्तमा वृष्टिः आसीत् । अतः आदित्यः चिन्तयति स्म यत् उत्तमा फलसमृद्धिः एतस्मिन् वर्षे प्राप्स्यते, वर्षं यावत् जीवननिर्वाहाय न कोऽपि क्लेशः



भविष्यति इति ।

क्षेत्रतः धान्यसङ्ग्रहाय आदित्यः सर्वं सन्नाहं कृतवान् आसीत् । किन्तु तस्मिन् एव दिने अकालवृष्टिः जाता, तत्कारणतः धान्यानि प्रवाहेण नीतानि अभवन् । तावदेव न, क्षेत्रे स्थिताः अजधेन्वादयः अपि प्रवाहेण नीताः । क्षेत्ररक्षणाय गतौ मातापितरौ अपि न प्रत्यागतौ । तौ अपि प्रवाहेण नीतौ आस्ताम् ।

एतत्सर्वं दृष्टवतः आदित्यस्य हृदयं शोकपूर्णं जातम् । सः बहुधा रोदनं कृतवान् । मातापितृविहीने ग्रामे वासः तस्मै सर्वथा न अरोचत । 'इतःपरम् अत्र वासः न युक्तः' इति विचिन्त्य सः गृहादिकं परित्यज्य कदाचित् गृहात् निर्गतवान् ।

अन्यमनस्कः सन् सः दिनद्वयं यावत् प्रयाणं कृतवान् । सः स्वयं न जानाति स्म यत् मया कुत्र गम्यते इति । तृतीये दिने विश्रान्त्यनन्तरं यावत् सः ततः निर्गन्तुम् उद्युक्तः तावता गुल्मे विलसत् किमपि वस्तु दृष्टं तेन । सः गुल्मसमीपं गत्वा तत् वस्तु स्वीकृतवान् । तत् वज्रखचितम् आसीत् । राजमुद्रायुक्तं च आसीत् । 'एषा राजमुद्रिका' इति विचिन्त्य सः तत् वस्त्रान्तरितं कृत्वा ततः प्रस्थितवान् ।

तद्दिने रात्रिसमये राजधानीसमीपे स्थितं शशाङ्कपुरनामकं नगरं प्राप्तवान् सः । यदा नगरं प्रविष्टं तदा राजप्रतिनिधिना क्रियमाणा घोषणा तेन श्रुता ।

राजप्रतिनिधिः घोषयति स्म – ''अन्तिमघोषणा एषा । राजमुद्रिकां यः प्राप्तवान् सः श्वः सायङ्कालाभ्यन्तरे यदि प्रत्यर्पयेत् तर्हि पारितोषिकं प्राप्नुयात् । तदनन्तरकाले यस्य समीपे सा प्राप्स्यते तस्य मरणदण्डनं भविष्यति'' इति ।

आदित्यः जनानां मुखात् घोषणासम्बद्धं विवरणं ज्ञातवान् । राज्ञः वज्रकङ्कणं विनष्टम् आसीत् । परम्पराप्राप्तं तत् । अतः राजा तत् अमूल्यं भावयति स्म । अतः एव सः घोषणां कारितवान् आसीत् – पूर्णिमातः पूर्वं यः वज्रकङ्कणम् आनीय दद्यात् सः पुरस्कारार्हः भवेत्, तदनन्तरकाले यस्य समीपे तत् प्राप्येत सः विना विचारणां शूलम् आरोपयिष्यते इति ।

जनानां मुखात् आदित्यः ज्ञातवान् यत् आ मासात् एषा घोषणा क्रियमाणा अस्ति इति ।

आदित्यः दिनद्वयं तस्मिन् नगरे वासं



कृतवान् । तृतीये दिने सः राजधानीं गतवान् । राजसभां गत्वा राज्ञे तत् वज्रकङ्कणं समर्पितवान् च ।

वज्रकङ्कणं प्राप्य राजा नितरां सन्तुष्टः । तस्य नेत्रे आनन्देन आश्चर्येण च विकसिते जाते ।

सः आश्चर्यपूर्णया दृष्ट्या आदित्यं पश्यन् अपृच्छत् - ''एतत् भवता कदा कुत्र प्राप्तम् ?'' इति ।

''दिनत्रयात् पूर्वं शशाङ्कपुरसमीपे कस्मिंश्चित् गुल्मे प्राप्तम्'' इति अवदत् आदित्यः ।

''यस्मिन् दिने प्राप्तं तस्मिन् एव दिने किमर्थम् एतत् आनीय न दत्तं भवता ? यदि तदा दत्तं स्यात् तर्हि भवान् पारितोषिकं प्राप्तवान् स्यात्'' इति अवदत् राजा ।

आदित्यः उत्तरं किमपि अवदन् मौनेन स्थितवान् आसीत् ।

''पूर्णिमायाः अनन्तरं येन कङ्कणम् आनीय दास्यते तस्मै कीदृशः दण्डः दास्यते इति किं भवता ज्ञायते ?'' इति राजा कठोरस्वरेण अपृच्छत् ।

''ज्ञायते एव'' इति अवदत् आदित्यः शिरः अवनमय्य एव ।

राजा क्षणकालं तम् आश्चर्येण पश्यन् स्थितवान् । अनन्तरं सिंहासनात् अवतीर्य महता प्रेम्णा तम् आलिङ्गितवान् । ततः सः अवदत् - ''यत् इच्छति तत् प्रार्थयतु'' इति ।

आदित्यः राजानं प्रणम्य अवदत् -

''महाराज ! भवतः राज्यस्य दक्षिणाग्रे स्थितस्य वज्रपुरनामकस्य ग्रामस्य निवासी अहम् । तस्य ग्रामस्य जनाः बाष्पधारा-नद्याः कारणतः महत् कष्टम् अनुभवन्तः सन्ति । जलबन्धनिर्माणद्वारा ग्रामः रक्षणीयः इति बहुवारं भवान् निवेदितः । भवतः राज्यस्य प्रजासु अन्यतमेन मया मदीयं कर्तव्यं पालितम् । राज्ञा सता भवता जलबन्धनिर्माणं कारणीयम् । एतत् भवतः कर्तव्यम् । एषोऽहं गच्छामि । कृपया अनुज्ञायताम्'' इति । एतावत् उक्त्वा सः राजसभातः निर्गतवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! वज्रकङ्कणदानाय राज्ञा यः अवधिः सूचितः आसीत् तदनन्तरम् एव तत् राज्ञे अर्पितवान् आदित्यः । एतत् आकस्मिकं न । बुद्ध्या विलम्बः कृतः तेन । एतत् किमर्थम् ? राजा यत्किमपि दातुं सिद्धः आसीत् । किन्तु आदित्यः जलबन्ध-प्रस्तावं कृत्वा ततः निर्गतवान् । एतत् किमर्थम् ? राजा किमर्थं वा तम् आलिङ्गितवान् ? दोषं कृतवतः आलिङ्गनं किम् उचितम् ? प्राप्तम् अवसरं धिक्कृतवान् आदित्यः किम् अविवेकी न ? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''आदित्यः निष्कपटः । श्रमे विश्वासवान् सः । वज्रकङ्कणं राज्ञे समर्प्य किमपि उपायनं प्राप्तव्यम् इति इच्छा न आसीत् तस्य । अतः एव राज्ञा सूचितस्य अवधेः अनन्तरम् एव सः कङ्कणं दत्तवान् राज्ञे । राज्ञः अवधानस्य आकर्षणम् एव तस्य उद्देशः आसीत् । तत् साधयित्वा जलबन्धकार्यं राजानं स्मारितवान् सः । जन्मभूमिविषये कियती प्रीतिः भवति इति एतस्मात् ज्ञायते । तस्य उपकारबुद्धिः अपि प्रशंसार्हा । एतत् ज्ञातवान् राजा तं प्रीत्या आलिङ्गितवान् । अत्र आदित्यस्य अविवेकिता कापि नास्ति'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षम् अवलम्बित-वान् ।






# जिह्वायां प्रथमः पाठः

कालिदासस्य कथां किं भवन्तः स्मरन्ति ? अनक्षरज्ञं तं तारुण्ये कालीदेवालये बद्धवन्तः आसन् । देवी स्वस्य आयुधेन तस्य जिह्वायां किञ्चित् लिखितवती । तदनन्तरं सः अतिप्रसिद्धः कविः जातः । विक्रमादित्यस्य आस्थाने स्थितेषु नवरत्नेषु अन्यतमः इत्यपि सः विख्यातः जातः । राक्षसं महिषासुरं मर्दितवत्याः दुर्गायाः विजयं निमित्तीकृत्य नवरात्रस्य अग्रिमं दिनं बहुषु राज्येषु विजयदशमीत्वेन आचर्यते ।

केषुचित् राज्येषु तद्दिने देव्याः सरस्वत्याः पूजा क्रियते । सा विद्याधिदेवता इति हेतुना तद्दिने बालानाम् पठनारम्भः क्रियते । एतत् दिनं केरले विद्यारम्भदिनम् इति उच्यते । एषु दिनेषु बहु प्रामुख्यं वहति एतत् । देवालयेषु विद्यारम्भम् इच्छुकानां बालानां नाम्नः पञ्जीकरणं क्रियते । तद्दिने तत्रत्यः अर्चकः, कश्चित् प्रसिद्धः जनः वा गुरुस्थाने तिष्ठन् सुवर्णमय्या लेखन्या जिह्वायाम् ॐ, हरि श्रीः इति, वर्णमालायाः प्रथमाक्षरं वा लिखति । अध्यात्मसम्बद्धासु अन्यान्यसंस्थासु एतस्य कार्यस्य निर्वहणार्थं सुप्रसिद्धाः कविलेखकादयः आहूताः भवन्ति । गते वर्षे कश्चन यवनालयः (मसजिद्) अपि समीपस्थबालेभ्यः अक्षरारम्भदीक्षां दातुम् अग्रे आगतः आसीत् । तत्रत्यः धर्मगुरुः (मुल्ला) वर्णमालायाः प्रथमाक्षरं फलके लेखितुं साहाय्यम् अकरोत् ।



पूर्वं बालः पितामहस्य अङ्के उपविशति स्म । कुटुम्बस्य कश्चन ज्येष्ठः तर्जन्या भूमौ प्रसारितस्य तण्डुलस्य मृत्तिकायाः वा उपरि बालेन लेखयति स्म । (अस्मिन् वर्षे विजयदशमी अक्टोबरमासस्य पञ्चमे दिनाङ्के आसीत् । )

# सन्धिः



सहस्रात् वर्षेभ्यः पूर्वं वाराणसीं कश्चन ब्रह्मदत्तकुमारः नाम युवा राजा पालयति स्म । सः सरलजीवनं कुर्वन् पूर्णसमयं जनहित-कार्यार्थमेव यापयति स्म ।

कदाचित् सः स्वस्य आस्थाने स्थितान् कांश्चन सत्यपरान् उद्दिश्य सूचितवान् - ''राज्ये सर्वे अधिकारिणः जनैः सह कथं व्यवहरन्तः सन्ति इति भवन्तः छद्मवेषेण रहस्यरूपेण गत्वा जानन्तु । यदि कश्चन कपटः, कठिन-व्यवहारवान् वा दृष्टः, तर्हि सः दण्डार्थं जागरणार्थं वा मम पुरतः आनेतव्यः भवद्भिः'' इति ।

राज्ये जनानां मध्ये कोऽपि मनस्तापः विचारभेदः वा यदि दृश्यते तर्हि जनाः स्वयमेव यथा सौहार्देन समस्याः परस्परमेव परिहरेयुः तथा प्रोत्साहं यच्छति स्म राजा ।

राज्ञः मन्त्रिणः विभिन्नमन्त्रालोचनसभाः आयोजयन्तः जनानां चर्चार्थं परिहारचिन्तनार्थं च साहाय्यं कल्पयन्ति स्म । अचिरात् एव वाराणसी शान्तिसुभिक्षायुक्ता स्वर्गतुल्या जाता ।

राजा विश्वासयोग्यान् परिजनान् पृच्छति स्म - ''अस्माकं निर्वहणे कान् दोषान् जनाः पश्यन्तः सन्ति ? वदन्तु'' इति ।

ते सर्वे - 'कोऽपि आक्षेपः नास्ति' इति निष्कपटतया वदन्ति स्म । परन्तु राजा एतस्मात् सन्तुष्टः न भवति स्म ।

सः स्वयं छद्मवेषं धृत्वा विभिन्नान् ग्रामान् वाणिज्यस्थानानि च गच्छति स्म । यत्र बहवः जनाः मिलन्ति तत्र गत्वा सामान्यैः सह जीवन् तेषां सम्भाषणं चर्चां च सश्रद्धं शृणोति स्म सः ।



परन्तु तेन कदाचिदपि स्वस्य निर्वहणादि-विषये आक्षेपः न श्रुतः । सर्वेऽपि तस्य ज्ञानस्य, न्यायनिष्ठायाः, उत्तमतायाः च श्लाघनं कुर्वन्ति स्म ।

एकदा राज्ञा चिन्तितम् – 'जनानां सुस्थिति-विषयकं मम ज्ञानं बहु अल्पम् । एतस्य नगरस्य समीपे स्थितानां ग्रामाणां परिचयः केवलम् अस्ति । एतस्मात् नगरात् दूरे स्थितानां ग्रामाणां स्थितिः का इति अहं न जानामि । मम राज्यस्य सीमाप्रदेशपर्यन्तं मया प्रवासः करणीयः' इति ।

एतदनन्तरं सः विश्वासयोग्येन सारथिना सह नगरात् बहिः प्रस्थितः । मरुभूमिप्रदेशेषु वेगेन गच्छन् ग्रामादिप्रदेशेषु मन्दगत्या प्रयाणं कुर्वन् जनानां सम्भाषणादिकं शृण्वन् गच्छति स्म सः । सर्वत्र अपि जनानां मुखतः श्लाघनमेव श्रूयते स्म ।

अपराह्णः सन्निहितः इति कारणतः सः प्रासादं प्रति प्रतिगमनं चिन्तितवान् । कोशल-वाराणसीराज्ययोः मध्ये कश्चन भागः आसीत्, यश्च मानवरहितभूमिः इति कथयितुं योग्यः आसीत् । सा च भूमिः उभयोः राज्ययोः सीमां दर्शयति स्म ।

ब्रह्मदत्तकुमारस्य सारथिः जननिबिडक्षेत्रं निवारयन् सीमामार्गे एव रथं चालितवान् । एवं कृतं चेत् शीघ्रप्राप्तिः शक्यते इति तस्य चिन्तनम् आसीत् ।

एवं गच्छन् सः तादृशम् एकं स्थलं प्राप्तवान्, यत्र च मार्गः बहु दुर्गमः विस्तार-रहितश्च आसीत् । सः यदा जागरूकतया रथं चालयन् आसीत् तदा तेन सम्मुखमेव आगतः अन्यः रथः दृष्टः । उभौ अपि सारथी रथं स्थगितवन्तौ ।

तत्र एतादृशी परिस्थितिः निर्मिता आसीत् यत् यदि कश्चन रथः किञ्चित् पृष्ठतः न गच्छेत् तर्हि केनापि अग्रे गन्तुं न शक्यते ।

अभिमुखम् आगतस्य रथस्य सारथिः वाराणस्याः राज्ञः सारथिम् उद्दिश्य उक्तवान् – "मित्रवर ! कृपया मार्गं त्यज । यतः एतस्मिन् रथे कोशलराज्यस्य राजा उपविष्टः अस्ति" इति ।

"भोः मित्र, भवतः राज्ञे नमो नमः । परन्तु भवता एव मार्गः दातव्यः, यतः अत्र मम रथे उपविष्टः अस्ति वाराणस्याः महा-राजः" इति उत्तरितवान् वाराणसीराज-सारथिः ।

"वाराणस्याः राज्ञे नमः । परन्तु मार्गदाने तस्य आद्यता भवेत् इत्येतदर्थं किमपि कारणं

न दृश्यते'' इति शान्तस्वरेण उक्तवान् कोशल-राजसारथिः ।

''भवतः कथनं समीचीनमेव । उभयोर्मध्ये कः वयसि ज्येष्ठः इति पश्याम । यः वयसा कनीयान् भवति सः ज्येष्ठे गौरवं दर्शयन् गमनाय मार्गं दद्यात्'' इति उक्तवान् वाराणस्याः सारथिः ।

कोशलस्य सारथिः एतत् अङ्गीकृतवान् । परन्तु परिशीलनात् ज्ञातं यत् उभौ अपि समवयस्कौ इति । तदनन्तरं तौ सारथी तयोः कुलयोः कीर्तिगौरवादीनां च विषये अव-लोकनं कृतवन्तौ । उभयोः अपि अत्युत्तमा परम्परा एव दृष्टा ।

अनन्तरं राज्ययोः विस्तारविषयः परि-शीलितः । तदा ज्ञातं यत् वाराणसीकोशल-राज्ययोः विस्तारः अपि समानः एव अस्ति इति ।

ततः तौ विभिन्नविषयान् अवलोकित-वन्तौ । परन्तु आश्चर्यस्य विषयः नाम तौ उभौ अपि सर्वेषु विषयेषु समानौ दृष्टौ ।

''हे मित्र । भौतिकान् अंशान् वयं विस्मराम । वयं महाराजयोः स्वभावादिकम् अवलोकयाम । भवतः राजा प्रजानां विषये कीदृशीं राजनीतिम् अनुसरति ?'' इति पृष्टवान् वाराणस्याः सारथिः ।

कोशलसारथिः उत्तरितवान् - ''दुष्टानां विषये निष्करुणः, सज्जनानां विषये परम-कारुणिकः च अस्ति मम राजा । मम राज्ञः नीतिः दिव्या सरला च । वञ्चकानां भयकारकः, निष्कपटानां कृते मृदुभाषी च सः । कथ्यताम् अस्ति किम् इतोऽप्युत्तमा एतत्सदृशी एव वा राजनीतिः भवतः राज्ञः ?'' इति ।

तदा वाराणस्याः सारथिः उक्तवान् - ''अहं किञ्चित् मम राज्ञः विषये वदामि । सः दुष्टान् शान्त्या जयति, मृदुत्वेन च वञ्चकान् । सर्वेषां प्रजानां प्रियः अस्ति सः । कारुण्यं सत्यं च तस्य दर्शकौ'' इति ।

वाराणस्याः सारथेः वाक्यस्य समाप्तेः अनुपदमेव कोशलस्य राजा रथात् अवतीर्य वाराणस्याः राजानं नमस्कृतवान् । वाराणसी-राजः अपि झटिति रथात् अवतीर्य कोशल-राजम् आलिङ्गितवान् ।

ब्रह्मदत्तकुमारः पूर्वजन्मनि बोधिसत्त्वः आसीत् । कोशलराजस्य अपेक्षानुसारं ब्रह्म-दत्तकुमारः आदर्शराजत्वेन जीवनार्थम् आवश्यकं मार्गदर्शनं कृतवान् । ततः उभौ अपि युवराजौ उत्तमौ स्नेहितौ जातौ ।





# कुब्जा राक्षसी

अरण्यस्य पार्श्वे कश्चन पर्वतमयः प्रदेशः आसीत् । तत्र काश्चन गुहाः आसन् । तस्मात् प्रदेशात् अनतिदूरे मातङ्गपुरनामकः ग्रामः आसीत् । तस्मिन् ग्रामे आसीत् मधुकरः । सः पाठशालायाम् अध्यापकः । सद्योविवाहितः सः । तस्य पत्न्याः नाम कोमला इति । सा उत्तमस्वभावा ।

कदाचित् कोमला प्रतिवेशिन्या पल्लव्या सह ग्रामाधिकारिणः गृहं प्रति कञ्चित् पारिवारिकोत्सवं प्रति गतवती । गमनसमये पल्लवी – ''भवत्या आभरणं न किमपि धृतम् । एतत् कर्णाभरणं वा धरतु'' इति उक्त्वा पेटिकातः एकं कर्णाभरणं निष्कास्य कोमलायाः कर्णयोः स्थापितवती एव ।

उत्सवतः प्रत्यागत्य कोमला ज्ञातवती यत् मार्गे कुत्रचित् एकं कर्णाभरणं पतितम् अस्ति इति । सा महता खेदेन पतिं प्रवृत्तं सर्वं निवेद्य अवदत् – ''पल्लव्याः कर्णाभरणं मया न स्वीकरणीयम् आसीत् । तया महान् अनुरोधः कृतः । अतः स्वीकृतम् । इदानीं नूतनं कर्णाभरणं कारयित्वा तस्यै दातव्यं भवति'' इति ।

पत्न्याः वचनं श्रुत्वा मधुकरस्य प्राणाः गताः इव । 'पत्नी सद्यः परिणीता । तस्याः निन्दनेन न किमपि प्रयोजनम् । नूतनं कर्णाभरणं कारणीयं चेत् सहस्रं रूप्यकाणि वा आवश्यकानि । इदानीं किं करणीयम् ?' इति बहुधा चिन्तितवान् सः । किन्तु ततः कोऽपि उपायः न प्राप्तः । साहाय्यकर्ता कोऽपि न दृश्यते स्म । चिन्ताभारकारणतः रात्रौ तेन निद्रा अपि न प्राप्ता । मध्यरात्रे सः खेदेन गृहात् निर्गतवान् । कुत्र गन्तव्यं, कुत्र वा गम्यमानम् अस्ति इति सः स्वयं न जानाति स्म ।

किञ्चिद्दूरं गमनानन्तरं सः ज्ञातवान् यत् अहं पर्वतस्य गुहानां समीपम् आगतः अस्मि इति । पर्वतगुहायाः पुरतः उपविष्टवतीं काञ्चित् कुब्जराक्षसीं सः दृष्टवान् । मधुकरं दृष्ट्वा सा

पृष्टवती – "भोः, अस्मिन् मध्यरात्रे किमर्थम् अत्र आगतं भवता ?" इति ।

राक्षसीं दृष्ट्वा नितरां भीतः मधुकरः अस्पष्टप्रलापम् आरब्धवान् । तस्य मुखात् अप्रयत्नेन आगतं – "कर्णाभरणं, कर्णाभरणम्" इति ।

आश्चर्यचकिता राक्षसी – "किं भवान् कर्णाभरणम् इच्छति ? मत्समीपे विभिन्नानां कर्णाभरणानां राशिः एव अस्ति । मम विवाहार्थं मम माता तेषां सङ्ग्रहणं कृतवती अस्ति । कश्चन सुन्दरः राक्षसः आगत्य मां वृणोति इति मम माता विश्वासेन निरीक्षमाणा अस्ति । कश्चन राक्षसयुवकः आगत्य मम आभरणानि पश्येत्, मां चापि पश्येत्, किन्तु मम कुब्जतां दृष्ट्वा इतः पलायनं कुर्यात् सः । मम तु भासते यत् अस्मिन् जन्मनि मम विवाहः न भवेत् इति । अतः एतानि आभरणानि मह्यं न आवश्यकानि । भवते ददामि अहम् । नयतु तावत्" इति वदन्ती सा गुहायाः अन्तः गतवती । अनन्तरं ग्रन्थिमेकं कष्टेन वहन्ती बहिः आगतवती ।

तम् आभरणस्य ग्रन्थिं दृष्ट्वा मधुकरः दिग्भ्रान्तः जातः । आदौ सः तस्य नयनं निराकृतवान् । परन्तु यदा राक्षसी सानुरोधम् उक्तवती तदा सः तं ग्रन्थिं स्कन्धे संस्थाप्य गृहं प्रति प्रस्थितवान् ।

सः यदा पल्लव्याः गृहस्य पुरतः गच्छन् आसीत् तदा धेनूनां कृते तृणं नेतुं बहिः आगतवती पल्लवी एतं दृष्ट्वा आश्चर्येण पृष्टवती – "अस्यां रात्रौ भवान् कुतः आगच्छन् अस्ति ? स्कन्धे विद्यमानः सः ग्रन्थिः



कः ?" इति ।

मधुकरः कष्टेन निश्श्वसन् ग्रन्थिम् अधः संस्थाप्य ततः कर्णाभरणद्वयं निष्कास्य तस्यै समर्पयन् उक्तवान् – "मम पत्नी भवत्याः एकं कर्णाभरणं नष्टं कृतवती । तदर्थम् एतत् कर्णाभरणद्वयं स्वीकरोतु" इति ।

पल्लवी यदा पौनःपुन्येन – "एतानि आभरणानि भवता कुतः प्राप्तानि ?" इति पृष्टवती तदा अनन्यगतिकतया तेन कुब्जराक्षस्याः विषयः वक्तव्यः अभवत् । अनन्तरं सः गृहं गतवान् ।

पत्युः पूर्णकथनस्य श्रवणानन्तरं कोमला किञ्चित्कालम् आभरणानि पश्यन्ती एव उपविष्टवती । ततः सा पतिम् उक्तवती – "तस्याः मायाविन्याः राक्षस्याः आभरणानाम् आवश्यकता का अस्ति अस्माकम् ? यदि



आभरणानां विषयं चोराः ज्ञास्यन्ति तर्हि अस्माकं प्राणरक्षणम् अपि महते क्लेशाय भवेत् । अतः एतानि आभरणानि सर्वथा मास्तु अस्माकम्'' इति ।

आभरणानि सन्ति इत्यतः पतिपत्नीभ्यां रात्रौ निद्रा एव न प्राप्ता ।

प्रतिवेशिनी पल्लवी पतिम् आत्मना ज्ञातं निवेद्य अवदत् - ''झटिति अस्माकं वृषभ-शकटं भवान् सज्जीकरोतु । आवां तस्याः कुब्जराक्षस्याः समीपं गच्छाव । या कुब्ज-राक्षसी आभरणग्रन्थिम् एव दानरूपेण दत्तवती तस्याः समीपे शकटपरिमितं सुवर्णम् अपि स्यादेव । तत् अस्माभिः आनेतव्यम्'' इति ।

ततः तौ शकटम् आरुह्य पर्वतस्थां गुहां प्रति गतवन्तौ । तदवसरे कुब्जराक्षसी गुहातः बहिः चिन्ताक्रान्ता सती उपविष्टवती आसीत् ।

यदा पल्लव्याः आगमनोद्देशः ज्ञातः तदा सा अवदत् - ''काचित् अपरिचिता आगत्य आभरणानि नीतवती । मम माता यदा एतत् ज्ञातवती तदा मां सम्यक् तर्जितवती । सा क्रोधेन तपन्ती अस्ति । गुहायाः अन्तः अस्ति सा । यदि सा भवन्तौ पश्येत् तर्हि मारयित्वा खादेत् । यावत् आभरणानि न प्रतिप्राप्यन्ते तावत् गुहायाः अन्तः भवत्याः प्रवेशः नास्ति इति माम् उक्तवती अस्ति सा'' इति ।

राक्षस्याः समीपे इदानीम् आभरणानि न सन्ति इति यदा ज्ञातं तदा नितरां निराशा पल्लवी उक्तवती - ''अये ! राक्षसीवर्ये ! भवत्याः सर्वाणि आभरणानि मम प्रतिवेशिन्याः गृहे सुरक्षितानि सन्ति एव । भवती मया सह आगच्छतु, तानि प्रत्यानयतु च'' इति ।

तदा कुब्जराक्षसी उक्तवती - ''दिने प्रयाणं कष्टाय मम । मानवानां मध्ये गमनात् महती भीतिः'' इति ।

क्षणकालं विचिन्त्य पल्लवी उक्तवती - ''मया आगमनसमये एकं भाण्डम् अपि आनीतम् अस्ति । तस्य अन्तः भवतीं प्रवेश्य कीलयिष्यामि । तस्य अन्तः भवती सुखेन शयनं करोतु । भवतीं शकटेन मम गृहं नीत्वा पशुशालायां स्थापयिष्यामि । उषःकाले भाण्डम् उद्घाटयिष्यामि । भवती प्रतिवेशिन्याः गृहं प्रविश्य सर्वनाशं करोतु । नखैः दन्तैः च तान् सम्यक् पीडयतु । अनन्तरं स्वस्य आभरणानि स्वीकृत्य प्रतिगच्छतु । तेषां प्राप्त्या भवत्याः माता महान्तं सन्तोषम् अनुभवेत्'' इति ।

कुब्जराक्षसी एतं प्रस्तावं सहर्षम् अङ्गी-

कृतवती ।

आभरणानि नीतवतः मधुकरस्य स्थितिः शोचनीया जाता । तेन ज्वरः अपि प्राप्तः । कोमला तस्मिन् धैर्यं पूरयन्ती अवदत् - ''एतावती भीतिः किमर्थं भवतः ? भवता राक्षसी न वञ्चिता खलु ? अन्याय्यम् अपि न कृतम् । तथापि परधनं विषसर्पायते इति तु अहम् अपि अङ्गीकरोमि । किन्तु एतस्मिन् आतपे एतानि उन्नीय नेतुम् अहं न शक्नोमि । अतः यदा आतपपीडा न्यूना भविष्यति तदा अहं गुहासमीपं गमिष्यामि । 'भवत्याः आभरणानि प्रतिनयतु' इति राक्षसीं वदिष्यामि च'' इति ।

मधुकरः एतदर्थं स्वसम्मतिं सूचितवान् । सायङ्काले कोमला निर्भयतया गुहासमीपं गतवती ।

तदवसरे गुहायाः पुरतः शिलायाः उपरि उपविश्य काचित् घोरराक्षसी विलपन्ती आसीत् - ''मम प्रियपुत्रि ! वत्से ! कुत्र गता भवती ? मया अल्पः कोपः कृतः इत्यतः किम् एवं मां परित्यज्य गमनं शोभते ? भवतीं विना अहं कथं वा जीवेयम् ? एषः प्रपञ्चः एव शून्यायते इदानीम्'' इति ।

कोमला धैर्येण राक्षस्याः समीपं गत्वा 'अम्ब !' इति वदन्ती नमस्कृतवती । प्रवृत्तं सर्वम् उक्त्वा - ''कृपया मम गृहम् आगत्य तानि आभरणानि नयतु'' इति उक्तवती च ।

राक्षसी कोमलां नखशिखान्तं सकृत् दृष्ट्वा - ''तेषां वराकाणाम् आभरणानां कारणतः एव अहं प्रियपुत्रीं तर्जितवती । वराकी सा कुपिता सती कुत्रापि गतवती । न जाने तया कीदृशं कष्टम् अनुभूयमानम् अस्ति इति । तानि आभरणानि इदानीं न आवश्यकानि मम'' इति वदन्ती रोदनं कृतवती ।



राक्षस्याः कथनं श्रुत्वा कोमला कुपिता । सा क्रोधमिश्रितेन स्वरेण अवदत् – ''अहं भवतीं स्पष्टतया वदामि । श्रृणोतु । भवत्याः पुत्र्याः आभरणानि न आवश्यकानि मम । वयं परिश्रमं कर्तुम् इच्छामः । परिश्रमेण प्राप्तम् एव सुखदायकम् । भवत्याः पुत्री कुब्जा । सा मानवानां मध्ये अन्यराक्षसानां मध्ये वा वासं कर्तुं न अर्हति । अतः अचिरात् एव सा अत्र आगमिष्यति एव । अतः अलं चिन्तया । आदौ मया सह आगत्य आभरणानि प्रत्यानयतु भवती'' इति ।

अनन्यगतिका राक्षसी कोमलायाः वचनम् अङ्गीकृत्य तया सह प्रस्थितवती । ग्रामप्राप्ति-समये मध्यरात्रः अतीतः आसीत् । कोमलया दत्तम् आभरणग्रन्थिं स्कन्धे आरोप्य यावत् सा गन्तुम् उद्युक्ता तावता कुब्जराक्षस्याः आक्रन्दनं तया श्रुतम् – ''बुभुक्षया पिपासया च अहं म्रियमाणा अस्मि । बहिः आनयन्तु माम्'' इति ।

राक्षसी पुत्र्याः कण्ठस्वरम् अभिज्ञातवती एव । सा महता सन्तोषेण – ''वत्से ! एषाहम् आगता'' इति उच्चैः वदन्ती वेगेन पशुशालां प्रति धावितवती । द्वारस्य तालं भञ्जयित्वा भाण्डं च भञ्जयित्वा सा पुत्रीं बहिः आनीत-वती । ततः तया पुत्री पृष्टा – ''वत्से ! भवतीम् एवं कष्टगर्ते पातितवान् सः कः ?'' इति ।

कुब्जा राक्षसी पल्लव्याः गृहं प्रदर्शितवती । राक्षसी हुँङ्कारं कुर्वती अग्रे गतवती, प्रहारेण द्वारं भञ्जयित्वा तत् गृहं प्रविष्टवती ।

''अयि दुष्टाः ! भवतः सर्वान् अन्विष्य दण्डयिष्यामि'' इति वदन्ती गृहस्थानि सर्वाणि वस्तूनि नाशितवती । अनन्तरं पल्लवीं दन्तैः नखैः च पीडयित्वा व्रणितां कृत्वा बहिः आगत्य – ''वत्से ! एतैः दुष्टैः अस्माकं वसतिः ज्ञाता अस्ति । अतः वयम् अन्यत्र गच्छाम'' इति वदन्ती वेगेन ततः निर्गतवती ।

''आभरणग्रन्थिं नयतु भोः'' इति ताम् उद्दिश्य उच्चैः अवदत् कोमला । तत् अश्रृण्वती इव ततः निर्गतवती राक्षसी ।

पल्लवी जातम् अपमाननं सोढुं न शक्ता । अतः जनाः यथा न पश्येयुः तथा रात्रौ एव ग्रामात् निर्गतवती सा ।



# भूलोके नास्ति देवः

रामः भरतः च प्रतिवेशिनौ । उभौ अपि धनिकौ । तयोः मैत्री आ बाल्यात् आसीत् । सर्वत्र तौ मिलित्वा एव सञ्चरतः स्म । किन्तु उभयोः अपि चिन्तनरीतिः अपि विभिन्ना । रामः भक्तिशीलः । सः वदति स्म - ''मानवजीवने यच्च सुखं भवेत् तस्य कारणं दैवनिर्णयः एव'' इति । तदा नास्तिकः भरतः वदति स्म - ''कष्टानि अपि भगवान् एव ददाति'' इति ।

भगवत्कृपया एव वृष्टिः भवति इति रामः वदति स्म चेत् भरतः वदति स्म - ''भगवतः कृपया क्षामः अनावृष्टिः चापि भवति'' इति ।

''भगवत्कृपया एव नद्यः प्रवहन्ति'' इति रामः वदति चेत् भरतः वदति स्म - ''भूकम्पझञ्झावातादयः अपि भगवत्कृपया एव भवन्ति'' इति । ''भवान् परमनास्तिकः'' इति भरतं वदति स्म रामः । भरतः मन्दहासं प्रकटयन् मौनेन तिष्ठति स्म ।

गच्छता कालेन उभौ अपि वृद्धौ जातौ । उभयोः अपि मरणक्षणः अपि सन्निहितः । तदा रामं स्वर्गं नेतुं देवदूताः आगताः ।

रामः तान् प्रणम्य अवदत् - ''मम परममित्रं भरतः पुरोवर्तिनि गृहे निवसति । सः नास्तिकः । सः अपि अन्तिमक्षणान् गणयन् अस्ति । देवः अस्ति इति यदा यदा मया उक्तं तदा सर्वदा सः मम वचनं खण्डयति स्म । भगवतः अस्तित्वे विश्वासः नास्ति तस्य । अतः तमपि स्वर्गम् आनयन्तु भवन्तः । भगवन्तं प्रत्यक्षं दृष्ट्वा वा सः विवेकं प्राप्नुयात्'' इति ।

देवदूताः एवमेव कृतवन्तः । रत्नसिंहासने विराजमानं भगवन्तं दृष्ट्वा भरतः आश्चर्यसागरे निमग्नः । तावता पृष्ठभागतः गम्भीरध्वनिः श्रुतः - ''अये नास्तिक ! भगवान् अस्ति इति इदानीं वा भवता ज्ञातं खलु ?'' इति ।

तदा भरतः अवदत् - ''आं ! देवः स्यात् स्वर्गलोके । किन्तु भूलोकः तु देवरहितः एव !'' इति ।



# वार्ताविषयतां गताः बालाः

## कोलातः हानिः इति पूर्वमेव सूचितम् आसीत्




तिरुवनन्तपुरस्य पङ्गोडप्रदेशीयस्य केन्द्रीयविद्यालयस्य एकादशकक्ष्यायाः विद्यार्थिनी अस्ति एस्. सारिका । वर्षत्रयात् प्राक् तया अन्तश्शालीयायां वार्षिकविज्ञानप्रदर्शिन्यां भागः स्वीकृतः आसीत् । तत्र तया कश्चन शोधप्रबन्धः पठितः । प्रबन्धस्य नाम आसीत् *'पेप्सि - आरोग्यबाधकम्'* इति, यश्च विषयः एतेषु दिनेषु जनमानसस्य केन्द्रबिन्दुः अस्ति । वास्तविकैः प्रमाणैः तया सम्यक् निरूपितम् आसीत् यत् विविधानि प्रसिद्धानि शीतपेयानि दन्तस्य कीदृशीं हानिं कुर्वन्ति इति । तया निरूपितेषु केचन अंशाः एवं सन्ति - चषकपरिमितात् कोकोकोलातः अपि महती हानिः भवितुम् अर्हति । ५००मिलीलीटर्परिमिते कोलापानीये ३८मि. ग्राम्परिमितं केफिन् भवति । यदि कयाचित् महिलया ३०० मि.ग्राम्परिमितं केफिन् सेव्यते तर्हि सा वन्ध्या भवेत् अपि । कूपीपरिमिते पेप्सिपानीये शर्करांशः तावत् भवति, यावच्च पूर्णप्याकेट्परिमिते 'टोफी'खाद्ये स्यात् । सा सोदाहरणं दर्शयति यत् पेप्सीपेयस्य प्रमुखप्रसारकः हालीवुड्नटः मैखेल् जे. फाक्स् यत् पार्किन्सन्रोगी आसीत् तस्य कारणम् अपि तस्य पेयस्य सेवनम् एव इति । अस्मिन् वर्षे प्रवृत्ते दक्षिणवलयविज्ञानप्रदर्शिन्यां सारिकायाः शोधेन प्रथमं स्थानं प्राप्तम् अस्ति ।

## कनीयसी पृष्ठभूमिगायिका

वर्षत्रयात् पूर्वम् एकादशवर्षीया सुभिक्षा प्रथमवारं चलनचित्राय गीतानि गीतवती । ये जनाः *लगान्, पुकार्, डम् डम् डम्* इत्यादीनि चलनचित्राणि दृष्टवन्तः ते एतस्याः ध्वनिं गीतानि च परिचिनुयुः एव । अस्य वर्षस्य आरम्भे अमेरिकादेशस्य कोलराडोप्रदेशे प्रवृत्ते बालसङ्गीतकार्यक्रमे भारतस्य प्रतिनिधिरूपेण तया गतम् आसीत् । तया तत्र स्वस्य प्रथमः गीतसङ्ग्रहः प्रकाशितः । कर्णाटकसङ्गीते हिन्दुस्थानीसङ्गीतपद्धतौ चापि समानप्रावीण्यं प्राप्तवती अस्ति सा । इलैराजः, कार्त्तिकराजः, युवान्शङ्करराजः इत्यादिभिः सङ्गीतनिर्देशकैः सह अपि कार्यं कृतम् अस्ति तया । सा इदानीम् एकादशकक्ष्यायां वाणिज्यशास्त्रस्य विद्यार्थिनी अस्ति ।



# शिलासदृशं हृदयं द्रुतम्



बबिता कुमारी, हरियाणा





के.वि.नन्दनः, चेन्नै

घर्मकालः । महती आतपपीडा आसीत् । तत्रापि अपराह्णसमये सूर्यतापः अधिकः । सूर्यः अग्निम् एव उद्गमति स्म इव । भूमिः तप्तं भ्राष्ट्रम् इव जाता आसीत् । आतपस्य तापः सर्वान् जीविनः भृशं पीडयति स्म । ग्रामस्य वीथयः निर्जनाः आसन् । सर्वेषां गृहाणां द्वाराणि पिहितानि आसन् । सर्वे गृहस्य अन्तः उपविष्टाः आसन् शयिताः वा ।

ग्रामस्य कोणे कस्मिंश्चित् प्राचीने गृहे काचित् वृद्धा निवसति स्म । सा अपि द्वारं पिधाय सूत्रनिर्माणयन्त्रेण सूत्रं निर्मान्ती गायति स्म - 'घूम घुमेरु चरखा मेरा, काटे लम्बा सूत' (अये चक्र ! भ्रमणं कुर्वता भवता दीर्घं सूत्रं निर्मातव्यम्) इति ।

तस्यः पार्श्वे दशवर्षीयः पौत्रः उपविश्य पितामह्याः कार्यं सश्रद्धं पश्यन् आसीत् । पितामही च 'चरखागीतेन' तं तोषयन्ती आसीत् ।

तावता द्वरताडनशब्दः कश्चन श्रुतः । बालकः झटिति उत्थाय धावन् गत्वा द्वारम् उद्घाटितवान् । तत्र चतुरः दृढकायान् तरुणान् दृष्टवती वृद्धा ।

''अम्ब ! बहिः घोरः आतपः बाधते । मार्गपार्श्वे कुत्रापि वृक्षः नास्ति । अतः विश्रान्त्यर्थं नास्ति एव अवकाशः । पिपासाकारणतः अस्माकं ओष्ठे शुष्के जाते स्तः । किं वयं भवत्याः गृहे किञ्चित्कालं विश्रान्तिं स्वीकर्तुम् अर्हेम ? यदा आतपस्य उग्रता किञ्चित् न्यूना भविष्यति तदा वयम् इतः निर्गमिष्यामः'' इति अवदत् तेषु अन्यतमः ।

वृद्धा तं तरुणं निर्निमेषदृष्ट्या दृष्टवती । तदीयस्य पुत्रस्य सादृश्यं भजते स्म सः । तस्याः पुत्रः भालचन्द्रः वर्षात् पूर्वं सूर्यतापाघाततः मरणं प्राप्तवान् आसीत् । सः एव त्रिभिः मित्रैः सह उपस्थितः अस्ति इव इति अचिन्तयत् सा वृद्धा ।

तस्य दर्शनात् तस्याः हृदयतन्त्रीः मृदु स्पृष्टा इव । वात्सल्ययुक्तेन स्वरेण सा अवदत् - ''वत्स ! एतत् गृहं स्वकीयं मत्वा यावत् इच्छा तावत् विश्रान्तिसुखम् अनुभवतु भवान्'' इति ।

एवं कथनसमये तस्याः नेत्रयोः कोणम् अश्रुबिन्दुभिः आर्द्रम् आसीत् ।

यदा सः तरुणः स्वागतप्रकोष्ठस्य कस्मिंश्चित् भागे विश्रान्त्यर्थम् उपविष्टवान् तदा



वृद्धा पाकशालां प्रति अगच्छत् निम्बूकपेयस्य (शरबत्) निर्माणाय। 'एते पिपासया पीडिताः स्युः। पिपासाकारणतः एतेषाम् ओष्ठे शुष्के दृश्येते। अतः अहम् एतेभ्यः शीतलपेयं दास्यामि' इति अचिन्तयत् वृद्धा।

वृद्धायाः हृदयं तेषां तरुणानां कष्टस्य निवारणाय परितपति स्म। किन्तु तरुणगणस्य नायकस्य मनः तु एतद्विरुद्धं चिन्तनं कुर्वत् आसीत्। यदा शीतपेयं सज्जीकृत्य वृद्धा पाकशालातः बहिः आगता तावता तरुणः कोषतः लघुभुषुण्डिकां निष्कास्य तां लक्ष्यीकृत्य गृहीत्वा अगर्जत् - ''यदि आत्मरक्षणाय किमपि क्रियेत तर्हि अहं भवतीं गोलिकाप्रहारेण धक्ष्यामि'' इति।

तरुणस्य मुखे कठोरता दृश्यते स्म। किन्तु वृद्धायाः मुखे अल्पा अपि भीतिरेखा न दृश्यते स्म।

तरुणेन सह आगताः अन्ये त्रयः गृहस्य प्रकोष्ठादिकं प्रविश्य आभरणपात्रादीनि अमुल्यानि वस्तूनि सर्वाणि सङ्गृह्य वस्त्रेण बद्धवन्तः। धनम् अपि स्वीकृतवन्तः। वृद्धा गृहे प्रवर्तमानं पश्यन्ती आसीत् मौनेन शान्ततया च।

अन्ते सा लघुभुषुण्डिकाहस्तं तं तरुणम् उद्दिश्य उक्तवती - ''वत्स! मया पूर्वम् एव उक्तं यत् एतत् गृहं स्वकीयं भावयतु इति।





अतः अत्रत्यानि भवदीयानि एव । तस्मात् एतेषां नयनम् अहं न आक्षिपामि । किन्तु मम प्रश्नः अपरः । मया महता प्रेम्णा सज्जीकृतम् एतत् शीतलपेयं को वा पिबेत् ? किं मम वात्सल्यद्योतकम् एतत् कार्यं सर्वथा व्यर्थम् ?'' इति ।

बाष्पगद्गदतया तया वृद्धया उक्तं तत् वचनं तस्य तरुणस्य हृदयम् अस्पृशत् । भुशुण्डिका-ग्रहणं शिथिलं जातम् । नयने आर्द्रे जाते । नयनाभ्यां निर्गता अश्रुधारा कपोले आर्द्रे अकरोत् । सः तरुणः स्वस्य वृद्धां मातरम् अस्मरत् । तस्याः सादृश्यम् एतस्यां वृद्धायाम् अपश्यत् । शिलासदृशं तदीयं हृदयं द्रुतं जातम् ।

सः झटिति अवनतः सन् तस्याः वृद्धायाः पादौ गृहीतवान् । तदीयाभ्यां नेत्राभ्यां निर्गता अश्रुधारा तस्याः पादौ अक्षालयत् । वृद्धा शान्ततया स्थितवती आसीत् । तस्याः मुखे शान्तता, मन्दहासः, प्रसन्नता च विलसति स्म । प्रीतिः हिंसां जितवती आसीत् ।

*पुत्रः* - तात ! भवता कदा इजिप्ट्देशं प्रति गतम् आसीत् ?

*पिता* - मया न कदाचिदपि सः देशः गतः खलु !

*पुत्रः* - एवं तर्हि भवता 'मम्मी' कुतः आनीता ?

**- सि. शीजा (१३), तुतिकोरिन्**

# योग्यः पाठः



बि. स्वामिनाथन्, चेन्नै

''अये, उत्तिष्ठ ! उत्तिष्ठ ! शालां प्रति गमनाय विलम्बः जातः । शीघ्रम् उत्तिष्ठ !''

एतादृशं मातुः वचनं मणिकण्ठं नितरां पीडयति स्म । प्रायः एतादृशं पीडकम् अन्यत् नास्ति तस्य दृष्ट्या । सः कदापि शालां प्रति गमनं न इच्छति स्म । तत्रापि गणिताध्यापकस्य मल्लशिववर्यस्य कक्ष्या तु तस्य महतीं शिरोवेदनां जनयति स्म ।

'किमर्थम् एते अध्ययनाय एवं मां पीडयन्ति ? यदा अहं क्रीडितुं गमनाय उद्युक्तः भवामि तदा एव माता आह्वयति मां पठनाय । अहम् अधिकं पठित्वा अधिकारी भवेयम् इति पितुः इच्छा । न जाने, एषा पीडा कदा समाप्यते इति' इति चिन्तयति मणिकण्ठः ।

मणिकण्ठस्य पिता कुप्पुस्वामी कश्चन रजकः । सः शिक्षणस्य महत्त्वं जानाति स्म । तस्य एकः एव उद्देशः आसीत् - 'मम पुत्रः कथमपि अधिकारी भवेत्' इति । एतदर्थं सः अहोरात्रं परिश्राम्यति स्म । किन्तु मणिकण्ठः पठने अनासक्तः । प्रायः तादृशं दिनं न स्यात् यस्मिन् दिने पिता कुप्पुस्वामी पुत्रं तर्जितवान् न स्यात् ।

विद्यालयविषये मणिकण्ठस्य जुगुप्सा दिने दिने प्रवृद्धा । शिक्षकाणां ताडनादयः एतां जुगुप्सां वर्धयन्ति स्म । यदा एषः जुगुप्साभावः पराकाष्ठां गतः तदा सः पितरम् अवदत् - ''तात ! इतःपरम् अहं विद्यालयं न गमिष्यामि । भवता सह कार्यार्थम् आगमिष्यामि'' इति ।

कुप्पुस्वामी एतत् श्रुत्वा क्षणकालं मौनेन स्थितवान् । ततः सः पुत्रम् अवदत् - ''अस्तु, श्वः आरभ्य भवान् मया सह कार्यार्थम् आगच्छतु'' इति ।

पितुः एतत् वचनं श्रुत्वा मणिकण्ठः नितराम् आश्चर्यचकितः । सः चिन्तितवान् आसीत् यत् पिता ताडयेत्, कठोरतया तर्जयेत् वा इति ।

अनन्तरदिने विद्यालयगमनात् विरामः मणिकण्ठस्य । स्वातन्त्र्यभावम् अनुभवति सः ।



नेह
अडिग,
बेङ्गलूरु

पितुः गर्दभेन सह सः आनन्देन वस्त्रक्षालन-स्थलं प्रति प्रस्थितवान् ।

'वस्त्राणां प्रक्षालनं, शोषणं, पुटीकृत्य गर्दभस्य उपरि आरोप्य प्रत्यानयनम् । एतानि कार्याणि न कष्टकराणि' इति अचिन्तयत् मणिकण्ठः ।

किन्तु वस्तुस्थितिः अन्या एव आसीत् । वस्त्रेषु स्थितस्य मालिन्यस्य अपनयनाय आदिनं पृष्ठं वक्रीकृत्य श्रमः करणीयः आसीत् । पृष्ठवेदना प्रथमदिने एव मणिकण्ठं तीव्रतया अबाधत । वस्त्राणां शोषणं, पुटीकृत्य गर्दभस्य उपरि आरोप्य गृहं प्रति नयनम् इत्यादयः लीलया कर्तुं योग्यानि तु न आसन् । 'अहो, मम पिता आ बहुभ्यः वर्षेभ्यः एतादृशं कठिनपरिश्रमं कुर्वन् अस्ति खलु' इति अचिन्तयत् सः । एतस्मात् अपि विद्यालयं प्रति गमनम् एव सरलम् इति भावना तस्मिन् उदिता ।

द्वित्राणां दिनानाम् अनन्तरं सः पितरम् अवदत् - ''तात ! श्वः आरभ्य अहं विद्यालयम् एव गमिष्यामि । भवता यथा इष्टं तथा अधिकारी भविष्यामि'' इति ।

पुत्रस्य एतत् वचनं श्रुत्वा आनन्दाश्रूणि स्रावितवान् कुप्पुस्वामी । ''वत्स ! भवान् अधिकारी भविष्यति एव । तत् साधयितुं सामर्थ्यम् अस्ति भवतः'' इति ससन्तोषम् अवदत् सः ।

''किन्तु तात ! मया यदा विद्यालयं प्रति गमनं निराकृतं तदा एव ताडनभर्त्सनादिना भवान् मां विद्यालयं प्रति प्रेषयितुम् अशक्ष्यत् खलु ? किमर्थं तथा न कृतम् ?'' इति अपृच्छत् मणिकण्ठः ।

''तथा कर्तुं तु अशक्ष्यं वत्स ! किन्तु तेन विद्यालयविषये भवतः जुगुप्सा इतोऽपि अवर्धिष्यत । तदा अध्ययनं कष्टकरम् अभविष्यत् । इदानीं तु भवान् स्वबुद्ध्या एव विद्यालयगमनं चिन्तयन् अस्ति । अनुभवात् प्राप्तं ज्ञानं सदापि श्रेष्ठम् । विद्यालयगमनात् कः लाभः इति ज्ञातम् अस्ति भवता । अतः भवान् निश्चयेन अधिकारी भविष्यति'' इति अवदत् कुप्पुस्वामी ।

पितुः कथनं सत्यम् इति अवगच्छन् मणिकण्ठः अङ्गीकारपूर्वकं शिरः चालितवान् ।



# राजकुमारी स्वर्णपक्षी च



कृत्तिका
सुगवनम्,
चेन्नै

पूर्वं सुखवर्मा नाम कश्चन राजा आसीत् । तस्याः पुत्री राजकुमारी सुहासिनी । तस्य राज्ये सर्वे सुखेन जीवन्ति स्म । सुहासिनी सर्वेभ्यः आनन्दं ददाति स्म । सा प्रकृत्याः सौन्दर्यम् अनुभवन्ती विभिन्नेषु सरोवर-कुल्या-नदी-तटेषु सन्तोषेण अटति स्म । तस्याः मित्राणाम् आवश्यकता एव न आसीत् । सा सर्वदा सन्तुष्टा भवति स्म ।

राजा सुखवर्मा प्रतिदिनमपि न्यायालये उपस्थितः सन् दैनन्दिनसमस्याः परिहरति स्म । बहवः तस्मै उपायनादिकं प्रेषयन्ति स्म । केचन दूतानां द्वारा सन्देशं प्रेषयन्ति स्म ।

एकदा प्रतिवेशिराज्यस्य राजा प्रतापः अपि कञ्चित् सन्देशवाहकं प्रेषितवान् ।

राजा प्रतापः उदारः आसीत् । सः सुखवर्माणं सन्तोषयितुम् इष्टवान् । सः तादृशम् उपायनं दातुम् इष्टवान्, यादृशं सुखवर्मणा इतः पूर्वं न प्राप्तं स्यात् । अतः सः 'भवान् यत् इच्छति तत् सूचयतु' इति पत्रे निवेदितवान् आसीत् ।

अनुपदमेव सुखवर्मणा सूचितं – 'यत् मम पुत्र्याः सन्तोषाय भवेत् तदेव मम इष्टतमम्' इति ।

एतत् ज्ञात्वा प्रतापः सन्तुष्टः जातः । सः राजकुमार्याः सुहासिन्याः सन्तोषदायकं किम् इति ज्ञातुम् एव कांश्चन जनान् नियुक्तवान् । 'रहसि गत्वा ज्ञात्वा आगन्तव्यम्' इति ते सूचिताः आसन् तेन । तेषां द्वारा प्रतापेन अवगतं यत् पशुपक्षिणां विषये राजकुमार्याः महती प्रीतिः इति ।





पुनीत जे. हिरेमठ बेङ्गलुरु

ततः राजकुमार्यै एकम् अनुपमम् उपायनं प्रेषितवान् राजा प्रतापः । प्रतापेन प्रेषितम् उपायनं द्रष्टुं राज्ये बहवः जनाः सम्मिलिताः । स्वर्णपञ्जरे विद्यमानं स्वर्णपक्षिणं दृष्ट्वा बहवः आश्चर्यचकिताः अभवन् । राजकुमारी अपि आश्चर्येण तत् दृष्टवती ।

तस्याः सेविका तं पक्षिणं राजकुमार्याः क्रीडास्थलं नीतवती । एकस्मिन् कोणे पञ्जरं लम्बितवती च । सुहासिनी यदा पक्षिणा सह



क्रीडितुम् इच्छति तदा सः पक्षी विमोच्यते स्म । क्रीडानन्तरं पुनः पञ्जरे बध्यते स्म च । अचिरादेव पक्षि-राजकुमार्योः महत् सख्यं जातम् । केवलं तस्याः हस्तचालनमात्रेण एव पक्षी पञ्जरं प्रविश्य अनन्तरदिने तस्याः पुनरागमनपर्यन्तं तत्रैव तिष्ठति स्म ।



परन्तु अचिरात् एव पक्षिणः क्रीडासक्तिः निर्गता । सुहासिनी पक्षिणि जातं परिवर्तनम् अवलोकितवती, सेविकां तस्मिन् विषये पृष्टवती च ।

तदा सेविका उक्तवती – ''यथा मनुष्याः स्वतन्त्राः भवितुम् इच्छन्ति तथैव पक्षिणः अपि । ते आकाशे उड्डयितुम् इच्छन्ति, न तु पञ्जरे भवितुम्'' इति ।

सुहासिनी पक्षिणं बहिः नीतवती । बाह्यं जगत् दृष्ट्वा पक्षी परमसन्तुष्टः जातः । पुनः सः राजकुमार्या सह क्रीडितुम् आरब्धवान् । एतस्मात् राजकुमारी सुहासिनी अपि बहु सन्तुष्टा अभवत् ।

केषुचित् दिनेषु अतीतेषु पक्षी पुनरपि निरुत्साही खिन्नः च जातः । पुनः सेविकया उक्तं – ''पक्षी स्वतन्त्रः भवितुम् इच्छति, न तु बन्धने स्थातुम्'' इति ।

परन्तु पक्षी उड्डीय अदृश्यः भवेत् इति भयेन सुहासिनी सेविकायाः वचनस्य पालने मतिं न कृतवती ।

प्रातः सुहासिनी यदा क्रीडास्थलम् आगतवती तदा तया सः पक्षी मृतः दृष्टः । तद्दिनात् आरभ्य सुहासिनी हसनं त्यक्तवती ।



अचिरात् एव समस्तं राज्यमेव हासरहितं जातम् ।

राजा कञ्चित् वैद्यम् आनाय्य – ''पक्षिणे पुनः जीवदानं कर्तुं किं शक्यते ?'' इति पृष्टवान् ।

''तत् तु न शक्यते । परन्तु तादृशः एव अन्यः पक्षी यदि आनीयेत तर्हि राजकुमारी कदाचित् सन्तुष्टा भवेत्'' इति सः राजानाम् उक्तवान् ।

राजा तादृशस्य पक्षिणः प्राप्त्यर्थं सर्वत्र प्रयत्नम् अकरोत् । परन्तु कुत्रापि सः तादृशं पक्षिणं न प्राप्तवान् । अतः सः राज्ञे प्रतापाय सन्देशं प्रेषितवान् । अनुपदमेव राजा प्रतापः स्वर्णपञ्जरे विद्यमानम् अपरं स्वर्णपक्षिणं प्रेषितवान् ।

*शिक्षिका* – राम ! हिमालयः कुत्र अस्ति ?

*रामः* – आर्ये, न जानामि अहम् ।

*शिक्षिका* – उत्पीठिकायाः उपरि तिष्ठतु तावत् !

*रामः* – इदानीमपि न दृश्यते आर्ये !

**– कौसल्या एस्. (११) बेङ्गलूरु**



यदा राजकुमारी तं पक्षिणं दृष्टवती तदा सा अनिर्वचनीयं सन्तोषम् अनुभूतवती । मृतः स्वर्णपक्षी पक्षौ चालयन् तस्याः पुरतः स्थितः आसीत् इव ।

राजा ताम् उक्तवान् – ''मृताय पक्षिणे आस्थानमान्त्रिकः जीवं दत्तवान् अस्ति'' इति ।

परन्तु पक्षिणः स्वातन्त्र्यापेक्षा इदानीं राजकुमार्या सुहासिन्या अवगतम् आसीत् ।

अतः सा पञ्जरं स्वीकृत्य समीपस्थम् अरण्यं गत्वा पक्षिणं विमुक्तवती । पक्षी आनन्देन उड्डीय अगच्छत् ।

स्वर्णपञ्जरं स्मृतिरूपेण शाश्वततया भवतु इति विचिन्त्य राजकुमारी तत् एकत्र लम्बितवती ।

चन्दमामा प्रस्तुतीकरोति

# चिलिका सरोवरः

मनोजदासः

Sponsored by



# Orissa
The Soul of India

## Orissa : miles & miles of creativity





The first Creator was God. Man comes next. Creativity is not just the bridesmaid of the elite and the well-read. It is a religion for the masses, in one coastal corner of India called Orissa. Truly does Orissa revel in the glory of her exquisite handicrafts. The artistry of the eye and the deftness of fingers culminate in exquisite filigree work, which is undoubtedly, the pride of Utkal, now Orissa.

The legacy of creativity, handed down from generation to generation is not only seen in the colourful canopies and beach umbrellas, but also in Orissa's folk Painting. Hornwork reaches it's crowning climax in the long-legged stork. Brass and bell metal-works are the be-all and end-all of creative imagination. That is not the end of it all. In short, Orissa is a poem which one and all must read time after time.




**For more information contact:** Director, Tourism; Paryatan Bhavan; Bhubaneswar-751014, Orissa, India
Tel: (0674) 2432177, Fax: (0674) 2430887, e.mail:ortour@sancharnet.in, website:www.orissa-tourism.com
Tourist Offices at; **Chennai:** Tamilnadu Tourism Complex, Ground Floor, Near Kalaivanar Arangam Wallajah Road, Chennai - 600002, Ph: (044) 25360891, **Kolkata:** Utkal Bhawan 55, Lenin Sarani, Pin-700013 Tel: (033) 22443653, **New Delhi:** Utkalika, B/4 Baba Kharak Singh Marg, Pin - 110001, Telefax (011) 23364580



# चिलिकासरोवरः अनन्यसदृशः



तादृशः कश्चन कालः ऊह्यताम्, यत्र आकाशः वर्णमयैः चिह्नैः अङ्कितः अस्ति, अधः नीलं निर्मलं जलं तं प्रतिबिम्बयति । एतत् उभयं यदि पश्येम तर्हि वयम् इहप्रपञ्चं विस्मरेम । एतत् स्वप्ने उत वास्तविकजगति इत्येतत् अपि न स्मर्येत । तस्मिन् दृश्ये वयम् अपि तादात्म्यं प्राप्नुयाम । तदा स्वच्छस्वातन्त्र्यस्य, अनन्ततायाः, रोमाञ्चस्य, विश्वासस्य च अनुभवः भवेत् ।

एतम् अनुभवं प्राप्तुम् इव समीपस्थेभ्यः बांग्लादेशनेपालप्रभृतिभ्यः देशेभ्यः इव सुदूरस्थेभ्यः आस्ट्रेलियासैबीरियाप्रभृतिभ्यः अपि विविधाः पक्षिणः अत्र आयान्ति ।

आ बहोः कालात् प्रतिवर्षम् अपि शैत्यकालस्य आरम्भात् किञ्चित् पूर्वं ते पक्षिणः पूर्वोक्तं सरोवरं प्रति आयान्ति । ग्रामान्, नगराणि, पर्वतान्,

अरण्यानि च अतिक्रम्य ते एतत् दीर्घप्रयाणं कुर्वन्ति । सहस्रशः मैल्प्रयाणं तत् । अनन्ते गगने स्वच्छन्दः सञ्चारः तेषाम् ।

एतस्मिन् अतिप्राचीने सरोवरे तेषाम् अस्ति विश्वासः - वयम् अत्र अकुतोभयाः स्थास्यामः इति । सरोवरं परितः ये वसन्ति तेषु अपि अस्ति एव तेषां विश्वासः । यदि कदाचित् तत्र वसद्भिः विश्वासद्रोहपुरस्सरं तेषु केचन मार्येरन् तर्हि ते एतं प्रदेशं प्रति आगमनविषये पुनश्चिन्तनं कुर्युः एव, उत्कृष्टव्यवहारं कुर्युः मानवाः इति स्मारयेयुः च ।

सः सरोवरः अस्ति चिलिकानामकः, यश्च ओरिस्साराज्यस्य राजधानीतः भुवनेश्वरतः शतकिलोमीटर्दूरे अस्ति । भारते विद्यमानेषु सरोवरेषु अति-विशालतमः एषः एव । १२०० चतुरस्रकिलोमीटर्प्रदेशे प्रसृतः अस्ति एषः । एतस्य वैशिष्ट्यानि सन्ति बहूनि । तेषु अन्यतमम् अत्र प्रस्तुमः ।

यदा एषः प्रक्षुब्धः भवति तदा एतस्य तुङ्गाः तरङ्गाः नृत्यन्ति इव ।



तस्मिन् समये पार्श्वस्थाः पर्वताः सरोवरस्थाः द्वीपाः च क्षणकालम् अदृश्यतां गच्छन्ति, पुनः दृष्टिगोचरतां यान्ति च । चन्द्रिकायुक्तायां रात्रौ गन्धर्वलोकः एव अत्र भूमिम् अवतरति इव । एतस्य नीलम् ऊर्ध्वतलम् अलौकिकं वर्णम् अभि-व्यञ्जयति । असङ्ख्याः तरङ्गाश्च सुवर्ण-दीपस्य शिखाः इव परिदृश्यन्ते ।

एतस्य सरोवरस्य जलं लवणमयम् इति वचनं श्रूयते । एतत् पूर्णसत्ययुक्तं न, असत्यवचनम् अपि न । दया, भार्गवी, लूना, गन्धवती इत्यादयः नद्यः प्रवाहयुक्ते काले महता वेगेन एतं सरोवरं प्रविश्य अपारं जलम् आनीय एतस्य अन्तः पातयन्ति । तासां नदीनाम् आगमनवेगः महान् भवति इति कारणतः तासां प्रवाहाः महता प्रमाणेन लवणांशं सरोवात् नीत्वा समुद्रे पातयन्ति अपि । एतेन लवणजलं पूर्णतः बहिर्नीतं न भवति चेदपि महान् भागः तु ततः निष्कासितः भवति एव । तस्मात् एव चिलिकायाः मध्यभागे स्थितं जलं न लवणमयम् । अतः

# नीला कच्छभूमिः

१,१००किलोमीटर्परिसरम् अभि-व्याप्य स्थिता चिलिका समुद्रजलस्य प्रतीपप्रसारेण निर्मितः सरोवरः । देशे अतिविशालत्वेन ख्यातः अस्ति एषः । विविधैः द्वीपैः उपेतः एषः सरोवरः अनेकेषां जलचराणाम् आकरः अस्ति । विविधानां पक्षिणाम् आवासभूमिः अपि । एषः सरोवरः पर्वतैः आवृतः सन् अर्ध-चन्द्राकारेण शोभते । सञ्चरतां मेघानां, सूर्यकिरणस्य च कारणतः एतस्य वर्णः पौनःपुन्येन परिवर्तते । ओरिस्साराज्यस्य तीरजनपदक्षेत्राणां हृदयस्थाने अस्ति एषः । पुरी, सुर्दा, गञ्जाम् इत्यादयः इतः अनतिदूरे एव सन्ति । बङ्गालोपसागरः स्वस्य मुखं दीर्घं प्रसारयन् इव प्रतीपप्रसृतजलेन विशालं कच्छभूमिं निर्मितवान् अस्ति ।

एतस्मिन् सरोवरे स्थिताः जीविजातयः सस्यजातयः च भीतिम् आपन्नाः, विनाशदशां गताः च सन्ति । चिलिका-सरोवरः दोविट्चार्प्रभृतीनां सार्ध-शताधिकानां पक्षिप्रभेदानाम् आश्रय-स्थानम् अस्ति। दोविट्चार्पक्षी एशियन्-तीरपक्षी । स्पून्बिल् सेण्ड्पिपर् इत्येषः विरललभ्यः पक्षी। सोऽपि अत्र वसति । अतः १९८७तमे वर्षे राष्ट्रियपक्षिधामत्वेन घोषितः अस्ति चिलिकासरोवरप्रदेशः ।

चिलिकायाः दर्शनाय हेमन्तकालः सुयोग्यः। यतः शैत्याधिक्यात् आत्मनः

➜

एव एतस्य अन्तः स्थिते काली-जयानामके मुख्यद्वीपे अन्यस्थलेषु इव सामान्यं जलम् एव प्राप्यते ।

सरोवरः समुद्रसम्पर्कयुक्तः भवति इति कारणतः लवणजलं सरोवरं प्रति आगच्छति अपि कदाचित् समुद्रात् । समुद्रसम्पर्ककारणतः समुद्रवासिनः मीनाः, कर्कटकाः इत्यादयः अत्र आगच्छन्ति । अतः एतं सरोवरं परितः निवसतां ग्रामवासिनाम् आहारसमस्या परिहृता भवति । प्रायः कोट्यधिकवर्षेभ्यः पूर्वं नैसर्गिकोत्क्रान्तेः कारणतः एषः सरोवरः समुद्रात् पृथग्भूतः स्यात् । एतं सरोवरम् उभयतः उभे पर्वतश्रेण्यौ रक्षिके इव स्थिते दृश्येते ।



एतस्य सरोवरस्य विषये विविधाः रमणीयाः कथाः अपि श्रूयन्ते । पूर्वं कदाचित् केचन समुद्रचोराः पुरीस्थं भगवतः जगन्नाथस्य विग्रहं चोरयितुं नौकाम् आरुह्य तीरम् आगतवन्तः । तत्समये मन्दिरस्य अर्चकाः स्वस्य आराध्यमूर्तिं, मन्दिरे स्थितां सम्पत्तिं च आत्मना सह नीत्वा कुत्रापि निलीय स्थितवन्तः । नगरस्थाः सर्वे जनाः अपि ततः निर्गताः आसन् । अतः सा नगरी निर्जना जाता आसीत् ।

प्रभूतम् ऐश्वर्यं प्राप्येत इति विचिन्त्य आगताः ते चोराः अत्र किमपि न प्राप्तवन्तः एव ।

चोरणाम् आगमनं जनान् कः बोधितवान् ? चोराः तु अन्धकारमय्यां रात्रौ रहसि आगताः आसन् । अतः तेषाम् आगमनस्य ज्ञानम् अन्यैः प्राप्तुं तु न शक्यम् आसीत् ।

कश्चन चोरः स्वनायकम् अवदत् यत् तरङ्गाणां द्वारा समुद्रः एव मन्दिरस्य अर्चकप्रमुखम् एतां वार्ताम् उक्तवान् स्यात् इति । अर्चकेषु कश्चित् तरङ्गाणां भाषां प्रायः जानाति इति सः स्वनायकं स्मारितवान् ।

एतस्मात् सर्वे चोराः समुद्रविषये क्रुद्धाः । नौकायाः आरोहणात् पूर्वं ते तीरे स्थित्वा समुद्रं बहुधा निन्दित-वन्तः । एतस्मात् समुद्रः नितरां क्रुद्धः । समुद्रे झटिति पर्वताकारकाः तरङ्गाः उत्पन्नाः । ते तीरम् आगत्य तान् चोरान्, तेषां नौकां च जले न्यमज्जयन् । एवं दुष्टाः ते चोराः दण्डिताः जाताः ।

चोराणां दण्डनाय आगताः महा-तरङ्गाः भूमौ अपि प्रभूतं जलं पातित-वन्तः ।

रक्षणाय सैबीरियाप्रभृतिभ्यः प्रदेशेभ्यः आगताः बहवः पक्षिणः तस्मिन् काले अत्र आकाशे डयमानाः दृश्यन्ते । एतं परितः स्थिताः पर्वताः, सिकतामयाः प्रदेशाः च चित्रकाः, कृष्णहरिणाः, वानराः, मत्स्याशिनः मार्जाराः, नकुलाः, शल्य-पक्षिणः इत्यादीनां वासस्थानानि सन्ति । सर्पाः, कूर्माः, गोधिकाः इत्यादयः जन्तवः अत्रत्ये तीरप्रदेशे सुखेन वसन्ति । सतपुरा-द्वीपपरिसरे डाल्फिन्मीनाः अपि द्रष्टुं शक्याः। एषः द्वीपप्रदेशः समुद्र-सरोवरयोः सङ्गमप्रदेशे अस्ति ।

नलबाना अत्रत्येषु विशालतमेषु द्वीपेषु अन्यतमः । एषः दशकिलोमीटर्विस्तृतः । चतुरः पञ्च वा मासान् एषः जलप्रवाहेण आवृतः सन् अदृश्यः एव तिष्ठति । विशिष्टजातीयाः कूर्माः, सर्पाः च अत्र दृष्टिगोचराः भवन्ति । डाल्फिन्, जल-मार्जारः, उलूकाः, समुद्रभल्लूकाः इत्यादयः अपि दृश्यन्ते एतस्मिन् परिसरे।

१९१७तमे वर्षे जातात् सर्वेक्षणात् ज्ञायते यत् सार्धैकशतविधाः मत्स्याः कर्कटकाः च अत्र सन्ति इति। अति-विरललभ्या सरीसृपजातिः अङ्गहीनः गोधिकाविशेषः बरकुडिया-द्वीपस्य शिथिल-सिकतासु ऐदम्प्राथम्येन दृष्टः अपि ।

नौकाविहाराय अपि योग्या व्यवस्था अस्ति अत्र । ओरिस्सा-प्रवासोद्यमविभागः बराकुलप्रदेशे जलक्रीडास्पर्धाः अपि आयोजयति कदाचित् ।



तस्मात् एषः सरोवरः तत्र निर्मितः । समीपस्थाः जनाः च उपकृताः अभवन् ।

अद्य सरोवरः यावत् विशालः दृश्यते ततोऽपि अधिकः विशालः आसीत् प्रायः केभ्यश्चित् शतकेभ्यः पूर्वम् । तदानीम् अत्र किञ्चन नौकास्थानकम् अपि आसीत् प्रायः । दूरप्रदेशेभ्यः एतत् नौकास्थानकं प्रति महानौकाः आगच्छन्ति स्म । क्रि.पू.चतुर्थे शतके भारतम् आगतः टोलमीनामकः (Ptolemy) ग्रीक्यात्रिकः वदति यत् अत्र एकं नौकास्थानकम् आसीत् इति । तदनन्तरं चीनायात्रिकेण ह्यूयेन्त्साङ्गेन अपि एतत् नौकास्थानकं प्रति गतम् आसीत् इति भासते । सः तस्य नौकास्थानकस्य नाम निर्दिशति – 'चेल्लिटाटो' इति । एतत् नाम चिलिकायाः सादृश्यं भजते ।

केचन पण्डिताः वदन्ति यत् एतस्य नौकास्थानकस्य नाम 'दन्तपुरम्' इति आसीत् इति । तच्च नाम बौद्धसाहित्ये उपलभ्यते । एतस्य सर्वस्य भौगोकिलसाक्ष्यम् अपि उपलभ्यते ।



एतस्मिन् सरोवरे शतशः लघवः महान्तः च द्वीपाः सन्ति । तेषु बहवः निर्जनाः शिलामयाः च । तेषु प्रसिद्धः अस्ति 'दीपपर्वतः' (दीप पहाड़् इति स्थानीयं नाम) । अभिमुखम् आगच्छन्तीनां नौकानाम् अभिज्ञानाय एतस्मिन् द्वीपे पर्वतस्य उपरि अग्निः प्रवर्त्यते स्म ।

एतेषु द्वीपेषु विशालतमः अस्ति 'परिकुड्'नामकः । बहुपूर्वं कस्यचित् सामन्तराजस्य द्वीपराजधानी आसीत् एषः । अद्य 'कालीजया' इति नाम्ना प्रसिद्धः सः यात्राप्रदेशः जातः अस्ति । बालुगाँव्तः६ किलोमीटर्दूरे अस्ति एषः । अत्र कालीजयायाः मन्दिरम् अस्ति । अतः एषः द्वीपः असङ्ख्यान् यात्रार्थिनः आकर्षति । 'काली' सर्वैः ज्ञाता सर्वत्र पूज्यमाना च देवता । किन्तु 'जया'शब्दः तस्याः नाम्नि कथं सन्निविष्टम् ? द्विविधं प्रतिपादनं श्रूयते एतद्विषये ।

एतस्य परिकुडद्वीपस्य संरक्षिका देवता आसीत् काली । द्वीपरक्षणाय एकं लघुसैन्यम् अपि आसीत् । कदाचित् कश्चन

# सरोवरस्थानि आकर्षकस्थानानि

***पक्षिद्वीपः –***

एतस्मिन् द्वीपे सदावासिनः, आगन्तुकाः च पक्षिणः बहवः द्रष्टुं शक्याः । पक्षि-वीक्षणप्रियाणां तु स्वर्गायते एषः द्वीपः ।

***कालीजयाद्वीपः –***

कालीजयाद्वीपः कालीजयादेवतायाः आश्रयस्थानम् । प्रतिवर्षं मकर-सङ्क्रमणदिने अत्र महान् उत्सवः भवति । एषः द्वीपः प्रसिद्धं प्रवास-स्थानम् अपि ।

***सातुपुरा –***

यत्र सरोवरसमुद्रयोः सङ्गमः भवति तत्र अस्ति एषः सातुपुराद्वीपः । चिलिका-सौन्दर्यस्य आस्वादनाय सुयोग्यं स्थलम् एतत् । समग्रे वर्षे डाल्फिन्मीनाः अत्र सदा दृश्यन्ते । शीतकाले आगन्तुकाः पक्षिणः विरामकालीनं प्रकृतिसौन्दर्या-स्वादनकेन्द्रं कुर्वन्ति एतं प्रदेशम् । सातुपुराद्वीपे नौका-विहारस्यापि व्यवस्था अस्ति ।



बलशाली राजा अत्र आक्रमणं कृतवान् । तदा तत्रत्यः राजा देवीं प्रार्थितवान् – 'मम राज्यं रक्षतु हे देवि !' इति ।

आक्रामकः राजा रात्रौ सरोवरतीरं प्रति आगतवान् । उषसि एव आक्रमणं करणीयम् इति तस्य चिन्तनम् आसीत् । किन्तु यदा उषःकालः सम्प्राप्तः तदा आक्रामकेण दृष्टं यत् दशसहस्राधिकाः सैनिकाः द्वीपरक्षणे निरताः सन्ति इति । एतत् दृष्ट्वा सः नितरां दिग्भ्रान्तः । लघुनि द्वीपे एतादृशः सन्नाहः भवेत् इति स्वप्ने अपि न ऊहितम् आसीत् तेन । 'परिकुडस्य सेनापतिः रक्षणाय एव एतावतः सैनिकान् नियोजितवान् अस्ति । एवं चेत् यदा वयं सरोवरमध्यं प्राप्स्यामः तदा सः हठात् आक्रमणं कुर्यात् एव' इति अचिन्तयत् सः । विवेकः तम् अबोधयत् यत् अविलम्बेन इतः प्रतिगमनम् एव श्रेयसे इति । अग्रे किम् ? आक्रामकः तस्मिन् एव दिने ससैन्यं ततः प्रतिगतवान् ।



शत्रुः यदा प्रतिगतः तदा परिकुडद्वीपस्य राजा एतस्याः घटनायाः कारणं किम् इति अचिन्तयत् । दशसहस्राधिकाः फ्लेमिङ्ग्पक्षिणः ये तत्र सम्मिलिताः आसन् तान् दृष्ट्वा आक्रामकेण चिन्तितम् आसीत् यत् एते सर्वे सैनिकाः एव इति । शत्रौ एषः भ्रमः देव्या एव उद्भावितः इति अचिन्तयत् सः । 'एषः जयः तस्याः एव कृपया प्राप्तः' इति सः निर्णीतवान् । तस्मात् सः देवीम् अभिवन्द्य 'कालीजया' इति तां निर्दिष्टवान् । एवं देव्या नूतनं नाम प्राप्तम् ।

अपरा एतद्विषयिणी अधिकजनप्रिया कथा एवम् अस्ति – 'कालीजया' इति कस्याश्चित् बालिकायाः नाम । तस्याः ललाटे कृष्णचिह्नम् आसीत् इत्यतः तत् नाम प्राप्तवती आसीत् सा । 'चिलिका'नामके लघुनि ग्रामे सा जाता । तस्याः आसक्तिः अंशद्वये एव । सा भगवतः पूजाम् आधिक्येन

इच्छति स्म, दीनानां वृद्धादीनां च सेवां कर्तुम् इच्छति स्म च । सा सर्वेषां प्रीतिपात्रम् आसीत् । अशिक्षितायाः तस्याः ग्रामीणबालिकायाः जीवने महत् परिवर्तनं किमपि अशक्यम् आसीत् । तया तत्रत्या परम्परा अनुसरणीया एव आसीत् । यदा सा प्राप्तवयस्का जाता तदा गृहजनाः चिन्तितवन्तः यत् एतस्याः विवाहः निर्वर्तनीयः इति । पार्श्वस्थे द्वीपे निवसन् कश्चन तरुणः वरत्वेन निश्चितः । विवाहः पार्श्वद्वीपे एव इति निश्चितम् । वधूरूपेण सा सज्जीकृता अपि ।

कालीजया रुदती विवाहे स्वस्य अनिच्छां प्रकटितवती । ''एतादृशाय वैवाहिकजीवनाय अहं सर्वथा योग्या न'' इति अश्रूणि स्रावयन्ती उक्तवती सा । किन्तु तस्याः वचनं को वा शृणुयात् ? 'विवाहं निराकुर्वती एषा मतिविकला एव' इति केचन निर्णीतवन्तः ।

विवाहदिनम् आसन्नम् । तस्मिन् दिने सा नौकाम् आरोपिता । पिता, मातुलः, अन्ये केचन बान्धवाः च नौकाम् आरूढवन्तः । कालीजया शान्ततया निश्चलतया च नौकायाम् उपविष्टवती । उपरि निर्मलः आकाशः दृश्यते स्म । अधः अपि अगाधे सरोवरे आकाशः प्रतिबिम्बितः दृश्यते स्म । यदा प्राप्तव्यं स्थानम् आसन्नं तदा कालीजया अस्वस्थचित्ता जाता । सा आकाशम् एव निर्निमेषं पश्यति स्म ।

तदवसरे अकस्मात् महान् वातः उत्पन्नः । सरोवरे महान्तः तरङ्गाः अपि उत्पन्नाः। यः आकाशः एतावत्पर्यन्तं निर्मलः आसीत् सः इदानीं कृष्णैः मेघैः व्याप्तः जातः। धाराकारवृष्टिः अपि क्षणाभ्यन्तरे आरब्धा । झञ्झावातः तु आसीत् एव । आकाशे विद्युतः तदा तदा स्फुरन्ति स्म । मेघगर्जनं निरन्तरं श्रूयते स्म ।

ते यया नौकया गच्छन्ति स्म सा तु डोलायते स्म । ''वत्से ! कुत्र अस्ति भवती ?'' इति उच्चस्वरेण पृष्टवान् पिता । प्रत्युत्तरप्राप्तितः पूर्वम् एव नौका अधोमुखा जाता ।

ततः अचिरात् एव मेघाः अदृश्यतां गताः । यावता वेगेन आगताः तावता एव वेगेन अदृश्याः जाताः आसन् ते । झञ्झावातः अपि क्षीणवेगः जातः आसीत् ।

यदा ते द्वीपतीरं प्राप्तवन्तः तदा तत्र सर्वं शान्तम् आसीत् । तदा तैः लक्षितं यत् अस्माभिः सह कालीजया नास्ति इति ।

"वत्से ! वत्से ! मम वत्से ! क्वासि त्वम् !" इति उच्चैः आक्रोशनम् अकरोत् पिता ।

तस्याः अन्वेषणाय अन्ये अपि बहवः प्रयत्नं कृतवन्तः । किन्तु सा तु केनापि न दृष्टा एव ।

तस्मिन् एव समये सरोवरे स्थिताः धीवराः विचित्रम् अनुभवं प्राप्त-वन्तः । वायुः अनुकूलः अस्ति चेदपि तेषां नौका तु प्रतिगच्छति स्म । काचित् अदृश्या शक्तिः तेषां नौकाः प्रतिप्रेरयति स्म । रात्रेः अन्धकारे अपि ते एकाम् अस्पष्टाकारां महिलाम् अभिज्ञातवन्तः, या च तेषां साहाय्यम् आचरति स्म । ते ऊहित-वन्तः यत् एषा कालीजया एव स्यात्

## सन्दर्शनाय योग्यः कालः

चिलिकासरोवरस्य दर्शनाय शीतकालः नितरां योग्यः । एतं सरोवरम् आश्रित्य जीवद्भिः असङ्ख्यैः जीविभिः सुशोभते एषः द्वीपः तदवसरे । सरोवरे नौकया विहारं कर्तुम् इच्छवः बलुगाँव्, बर्कुल्, रम्भा इत्यादिषु स्थलेषु भाटकनौकां प्राप्तुम् अर्हन्ति । एतत्प्रदेशवासिनां दारुमय्यां नौकायाम् उपविश्य गत्वा अपि मत्स्यग्रहणं कर्तुं शक्यम् ।

## पर्यटनम्

***निर्मला झार् –***

रम्भातः ११ किलोमीटर्दूरे बर्कुलतः २१ कि.मी.दूरे च स्थितः 'निर्मलाझार्' प्रदेशः धार्मिकपरिसरबहुलः । रमणीयं प्रवासिकेन्द्रम् अपि अस्ति एतत् ।

***नारायणी –***

बर्कुलतः १० किलोमीटर्दूरे स्थितः एषः प्रदेशः भगवत्याः नारायण्याः स्थलम् । आवर्ष प्रवाहेण युक्तायाः लघुनद्याः तीरे अस्ति एतत् स्थलम् । देवालयपरिसरः, तत्समीपस्थाः प्रदेशाः च निश्चयेन सन्ति नेत्रोत्सवकराः ।

***बनपुरम्***

भगवत्याः दक्षप्रजापतेः च आलयैः युक्तं धार्मिककेन्द्रम् अस्ति एतत् । एतत् स्थलं बर्कुलतः १३ किलोमीटर्दूरे, बलुगाँव्तः अष्टकिलोमीटल्दूरे च अस्ति ।

इति । स्वमरणानन्तरम् अपि कालीजया परोपकारं करोति स्म बहुधा । तस्याः मरणम् अपि तत्प्रदेशवासिनां रक्षणायै एव जातम् ।

एतस्याः घटनायाः पूर्वम् अपि तत्र देवीप्रतिमा आसीत् एव प्रायः । यदा एषा घटना प्रवृत्ता तदनन्तरं तस्यां प्रतिमायां प्रायः कालीजयात्वं दृष्टं जनैः । माघमासे मकरसङ्क्रमणकाले (जनवरीमासस्य मध्यभागे) कालीजयायाः मन्दिरे विशेषोत्सवः महता वैभवेन प्रचलति । जनाः तदवसरे देव्यै कुक्कुटान् अजान् च अर्पयन्ति । किन्तु ते न मार्यन्ते तैः । पूजाविधेः अनन्तरं ते स्वच्छन्दविहारार्थं त्यज्यन्ते । अतः ते जीविनः समीपस्थम् अरण्यं प्रति गच्छन्ति । सरोवरं परितः त्रयः पर्वतप्रदेशाः सन्ति । प्रतिवर्षम् एवम् अर्पणं भवति इति कारणतः मन्दिरपरिसरे अजानां कुक्कुटानां च सङ्ख्या अधिका जाता । अतः एव तस्मिन् प्रदेशे बहवः अजाः कुक्कुटाः च स्वच्छन्दतया अटन्तः दृश्यन्ते सदापि ।

कालीजया तु निरन्तरं जनानां साहाय्यं कुर्वती एव भवति । एताम् एव



प्रवृत्तिम् अनुसरन्तः जनाः सरोवरस्य शुद्धतायाः विषये शान्तिरक्षणविषये च यदि साहाय्यं कुर्युः तर्हि कोटिशः रूप्यकाणि सञ्चितानि भवेयुः निश्चयेन । यतः सरोवरस्य स्वच्छतायाः शान्ति-परिसरस्य च रक्षणाय प्रतिवर्षं कोटिशः रूप्यकाणि व्ययीक्रियन्ते सर्वकारेण । जनानां सहकारः अस्ति चेत् स च व्ययः निश्चयेन खलु सञ्चेतुं शक्यः स्यात् ? योग्याः रक्षणोपायाः आश्रिताः चेत् चिलिकासरोवरं जगति अद्वितीय-सुन्दरप्रदेशत्वेन कल्पयितुं शक्येत एव ।

यत्र सरोवरसमुद्रयोः सङ्गमः भवति सः प्रदेशः उच्यते 'सात्पुरा' इति । तत्रत्यः सूर्यास्तः अति-रमणीयः । एतस्य तात्पर्यम् एतत् न यत् अत्रत्यः दिनकालः न रमणीयः इति । सः कालः अपि रमणीयः एव । दिनकाले अपि तत्रत्यं दृश्यं नयनमनोहरं भवति । एकत्र गर्जन् समुद्रः । अपरत्र शान्तः नील-सरोवरः । इतरत्र हरिद्वर्णभरिताः पर्वताः । आकाशे सञ्चरन्तः मेघाः । अनुग्रः सूर्यः । एवं सर्वम् अपि रमणीयम्

## कथं गन्तव्यं तत्र?

चिलिकां प्रति गमनाय यानमार्गः, रेल्मार्गः, आकाशमार्गः च अनुकूलाः । समीपस्थं विमानस्थानकं भुवनेश्वरीयं, यच्च बर्कुलतः १०५कि.मी.दूरे, रम्भातः १३०कि.मीदूरे, सात्परातः ११० कि.मी. दूरे च अस्ति । 'इण्डियन् एर्लैन्स्'- विमानानि देहली, कोल्कता, विशाख-पत्तनम्, रायपुरम्, हैदराबाद्, मुम्बयी, चेन्नै इत्येतेभ्यः प्रदेशेभ्यः अत्र आयान्ति ।

दक्षिणपूर्वरेल्मार्गे सञ्चरत् कोल्कता-चेन्नैरेल्यानं बलुगाँव्, चिलिका, खालिकोट्, राम्भा इत्येतेषु प्रदेशेषु चिलिकासरोवरं स्पृशति । बर्कुलं प्रति गमनाय समीपस्थं रेल्वेस्थानकम् अस्ति बलुगाँव् (५.की.मी) । सात्पुरागमनाय पुरी समीपतरा भवति (५० कि.मी.) ।

पञ्चमसङ्ख्याकः राष्ट्रियमहामार्गः (N.H.No. 5) चेन्नैकोल्कतानगरयोः सम्पर्कं कल्पयति । स च मार्गः कटक्, भुवनेश्वरम्, बलुगाँव्, बर्कुल, राम्भा, बेहरामपुरम्, विशाखपत्तनम् इत्येतान् प्रदेशान् अपि स्पृशति । स एव मार्गः चिलिकातीरे अपि अस्ति । ओटिडिसि, अन्याः स्वायत्तसंस्थाः च सुखप्रयाण-योग्यानि कार्यानानि अन्ययानानि च व्यवस्थापयन्ति । एषा व्यवस्था पुर्यां भुवनेश्वरे वा प्राप्तुं शक्या ।

अत्र । डाल्फिन्मीनग्रहण-व्यसनवतां कृते अपि मनोविनोदाय अयं प्रदेशः प्रशस्ततरः ।

सरोवरपरिसरः ऐतिहासिकपरम्परया समृद्धः अस्ति । 'काङ्गोड्'नामकस्य प्राचीनसंस्थानस्य राजधानीत्वेन भाव्यमानं बानपुरम् इतः समीपे अस्ति । तत्कालीयैः राजभिः बहूनि मन्दिराणि निर्मितानि आसन् । तेषु बहूनि सुस्थितौ सन्ति अद्यापि । तेषु पूजादिसम्प्रदायकार्यक्रमाः अद्यापि अक्षुण्णतया प्रचलन्ति यथापूर्वम् । सरोवरतीरे निसर्गनिर्मिताः बहवः विशालाः एकान्तप्रदेशाः द्रष्टुं शक्याः ।

सरोवरस्य दर्शनात् स्फूर्तिं प्राप्य ओरिस्सीयाः बहवः कवयः काव्यं रचितवन्तः । तेषु अन्यतमः अस्ति आधुनिकः कविः राधानाथराय्वर्यः । सः सरोवरस्य भव्यतां स्वकीये काव्ये सम्यक्तया चित्रितवान् अस्ति । सरोवरस्य विस्तारवैविध्यं कविना शब्दैः चित्रितम् अस्ति । सरोवरस्य नैसर्गिके सौन्दर्ये लीनतां प्राप्य कविः वर्णनं करोति ।

सरोवरस्य वर्णयिता अपरः प्रसिद्धः कविः अस्ति गोपबन्धुदासः । सः आधुनिकस्य ओरिस्साराज्यस्य निर्माता इत्यपि परिगण्यते । सरोवरतीरे रैल्यानेन सञ्चरता यथा वर्ण्येत तथा एतस्य मनोहरं सौन्दर्यं वर्णितवान् अस्ति सः ।



प्रकृतेः यत् अपूर्वनिर्माणम् अस्ति तत्र निहितान् अंशान् सः विशेषतः वर्णयति स्वकाव्ये ।

सरोवरस्य वर्णयिता तृतीयः कविः अस्ति गोदावरीशमिश्रः । सः कालीजयायाः कथां स्वस्य रमणीयैः पद्यैः वर्णितवान् अस्ति ।

स्वभावसहजं जाड्यं परिहृत्य यदि वयम् एतम् अपूर्वं सरोवरं द्रष्टुं गच्छेम तर्हि निश्चयेन विशिष्टम् अनुभवं प्राप्नुयाम एव । अत्र गमनसमये मनोरञ्जनमात्रम् अस्माकम् उद्देशः न स्यात्, प्रत्युत अत्रत्यस्य शान्तेः सौन्दर्यस्य च विषये आदरः स्यात्, तस्य रक्षणे च परमादरः अपि स्यात् । एषः सरोवरः अपूर्वं तेजोमण्डलम् अपि वहति ।

बहोः कालात् पूर्वं केचन जनाः जगन्नाथमन्दिरं गत्वा तत्रत्याः मूर्तीः चौर्येण आनीय परिकुडद्वीपे निगूहित-वन्तः आसन् । भगवते जगन्नाथाय एव आश्रयं दत्तवान् सरोवरः एषः दुःखावेगा-दिभ्यः मुक्तिं दत्त्वा मनसः शान्तिं कुतो वा न कल्पयेत्? एतस्य चेतोहारि वैशाल्यम् अस्माकं मनसः विस्तारणे निश्चयेन उपकुर्यात्।



## वासव्यवस्था कुत्र ?

सरोवरं परितः स्थितेषु विविधेषु स्थलेषु वासव्यवस्था उपलभ्यते । कानिचन वासभोजनगृहाणि ओरिस्सीयया प्रवासाभिवृद्धिसंस्थया (OTDC) निरुह्यन्ते । अन्यानि कानिचन स्वायत-संस्थाभिः व्यक्तिभिः वा सञ्चाल्यन्ते ।



## प्रवासे साहाय्यम्

राम्भाप्रवासिकार्यालयः, बर्कुल् पुरीप्रवासिकार्यालयः, VIP, च्वाक्

# प्राकृतिकविवरणकेन्द्रम्

सतपडास्थम् अभ्यागतसहायकेन्द्रं चिलिकां द्रष्टुम् आगतैः जनैः सदा पूर्णं भवति । एतत् केन्द्रं लघुसङ्ग्रहालयः इव अस्ति । समग्रस्य चिलिकापरिसरस्य पूर्णपरिचयं ददाति एतत् । चिलिकां द्रष्टुम् आगतः सर्वोऽपि सरोवरपरिसरस्थायाः जीववैविध्यव्यवस्थायाः परिचयं विविधैः प्रदर्शनैः, चित्रशालाभिः, मत्स्यकेन्द्रैः, दृश्यश्रव्यसाधनैः, स्पर्शमात्रेण विवरणदातृभिः यन्त्रैः, अन्यैः च प्रकारैः यथा प्राप्नुयात् तथा करोति एतत् केन्द्रम् । अत्र बालानां कृते ज्ञानान्वेषणप्रकोष्ठः अपि परिकल्पितः अस्ति । एतस्याः कच्छभूमेः नैसर्गिकपरिसरपरिचयम्, अत्र वसतां जीविनां कृते सम्भाव्यमानाम् आपदं, जीववैविध्यपरिसरस्य संरक्षणस्य आवश्यकतां च सम्यक्प्रकारेण परिचाययितुम् एते प्रयत्नाः क्रियन्ते ।

सन्दर्शकानाम् आनुकूल्यकल्पनाय एतेन केन्द्रेण सङ्गणकसाहाय्येन स्पर्शमात्रेण विवरणदानव्यवस्था कृता अस्ति । एवमेव अत्रत्यं विवरणं ज्ञापयितुं स्थिरप्रदर्शिनी, आगन्तुकानां पक्षिणाम् अत्र वसतां जीविनां च विविधानि चित्राणि, विविधानि विवरणानि दातुं लेखाङ्कितध्वनिप्रसारव्यवस्था इत्यादयः अपि उपकल्पिताः सन्ति । विनोदेन सहैव ज्ञानसम्पादनाय अत्र बालानां कृते कूटमार्गकेन्द्राणि, विविधाः क्रीडाः इत्यादयः अपि व्यवस्थापिताः सन्ति ।



# Touch Orissa to feel India

Culture



Flowing through the arteries of Orissa, is the living and continuing culture of India... its varied expressions and its rich variety. The very stones speak of the unique history of the nation. The temple-culture condenses the quintessence of India. Whether it is the sacred environs of Lord Jagannath temple, or the eroticism of Konark's Sun temple, the wondrous caves of Jainism or the mystical monasteries of Buddhism, the paintings of folklore or the weaver's magic... Orissa speaks eloquently of a living past and continuing present.The rhythmic and exotic classical 'Odissi dance' evolved from the cult of the 'devadasis' or female temple dancers reverberates not only within the portals of the nation, but also echoes on foreign shores too. Folk dances like the 'Chhow' or the 'Sambalpuri' dance and tribal dances like the 'Ghumura' & 'Paraja' can set any soul ablaze. Indigenous theatre in the form of 'Prahalad-Nataka' or the 'Dhanuyatra' are expressions of the 'Indianness of India'. Fairs like the 'Bali Jatra' remind us of our ancient maritime links with Bali. And to crown it all is our universally-acclaimed 'Rathyatra' of Lord Jagannath which has infected the world. So... sure and true flows the Orissan culture reflecting the Indian Culture.




Visit Orissa - Experience India.

**Orissa**
The Soul of India

**For more information contact**: Director, Tourism; Paryatan Bhavan; Bhubaneswar-751014, Orissa, India
Tel: (0674) 2432177, Fax: (0674) 2430887, e.mail:ortour@sancharnet.in, website:www.orissa-tourism.com
Tourist Offices at; **Chennai:** Tamilnadu Tourism Complex, Ground Floor, Near Kalaivanar Arangam Wallajah Road, Chennai - 600002, Ph: (044) 25360891, **Kolkata**: Utkal Bhawan 55, Lenin Sarani, Pin-700013 Tel: (033) 22443653, **New Delhi:** Utkalika, B/4 Baba Kharak Singh Marg, Pin - 110001, Telefax (011) 23364580







# Face to Face with Nature

*CHILIKA - the hopping , Singing and flying nursery for children. This lazy and dreamy Chilika lake dwells in the East Coast of Orissa. When in Chilika, you are in nature's class-room, being taught the alphabets of nature. "This is a dolphin" and "That is a heron" - a live picture book for kids. Parents take note: Open the eyes of your children to this special page of ever-gathering beauty. Chilika is the wintering ground for migratory birds. Colours and varied shapes shall tickle the imagination of young minds. In boats one can go exploring little fairylands - the exciting islands. Water sports adds to the existing excitement for kids and men with young hearts. In the middle of this clear, dark blue lake stands the famous 'Kalijai temple'. The story of Kalijai will chase tender hearts like a dream. Capture the talkative beauty and bounty of the gorgeous Chilka in your dead film reels and immotalise the moments of fleeting beauty in the hearts of your young ones.*





**For more information contact**: Director, Tourism; Paryatan Bhavan Bhubaneswar-751014, Orissa, India, Tel: (0674) 2432177, Fax: (0674) 2430887
e.mail:ortour@sancharnet.in, website:www.orissa-tourism.com
Tourist Offices at: **Chennai**:Tamilnadu Tourism Complex,Ground Floor Near Kalaivanar Arangam, Wallajah Road, Chennai - 600002
Ph: (044) 25360891, **Kolkata**: Utkal Bhawan 55 Lenin Sarani, Pin-700013, Tel: (033) 22443653
**New Delhi**: Utkalika, B/4 Baba Kharak Singh Marg, Pin - 110001
Telefax (011) 23364580



**Orissa**
The Soul of India



# अन्धकारात् प्रकाशं प्रति..



अनुभा मोहन्ती, कटक्



ऐश्वर्या गणेशन्, भोपाल्

रात्रौ घोरः अन्धकारः आसीत् । चन्द्ररहितः आकाशः । प्रकाशरहितं गृहम् । गाढान्धकारः सर्वत्र । अहं सुप्ता आसम् । तदा कश्चन शब्दः श्रुतः । मध्यरात्रस्य द्वादशवादनस्य स्वागतं कुर्वत्याः घट्याः घण्टानादस्य शब्दः आसीत् सः ।

तदा मम प्रकोष्ठं प्रति आकारद्वयस्य आगमनं मया दृष्टम् । अहं नितरां भीता ।

मया भयोत्पादिनीः विविधाः कथाः स्मृताः, यत्र पिशाचाः चोराः च आसन् । 'मध्यरात्रे द्वादशवादने पिशाचाः चोराः एव वा गृहाणि बाधन्ते । निश्चयेन तेषु एव अन्यतमं स्यात् एतद् आकारद्वयम् । मम मरणं तु सन्निहितमेव' इति चिन्तितं मया । भयेन त्रस्तायाः मम नेत्रोन्मीलनं कर्तुम् अपि धैर्यं न आसीत् । कष्टेन निद्रातुं प्रयत्नः कृतः, परन्तु निद्रा मत्तः दूरं गता आसीत् ।

तदा अहं गीतस्य शब्दं श्रुतवती । रागः तु ध्वनिमुद्रणयन्त्रात् एव । 'ध्वनिमुद्रणयन्त्रं कथं ध्वनिम् उत्पादयितुम् अर्हेत् ? यतः इदानीं विद्युत् नास्ति खलु !' इति चिन्तनं मम मनसि आगतम् ।

तदा मन्दः प्रकाशः प्रकोष्ठे प्रसृतः । शब्दः, प्रकाशः, उभौ आकारौ च वातावरणं भयानकं कारितवन्तः । मम हृदयकम्पनम् अधिकम् अभवत् ।

अहं चकिता । परन्तु क्षणमात्रमेव । यः शब्दः श्रुतः सः मधुरः स्वरः ध्वनिमुद्रणयन्त्रात् एव । 'शुभमस्तु जन्मदिनं, शिवमस्तु ते' इति गीतं श्रूयते स्म । यः प्रकाशः दृष्टः सः तु त्रयोदशानां सिक्थवर्तिकानाम् एव । आकारद्वयं तु मम मातापित्रोः एव । ताभ्यां सह ध्वनिमुद्रणयन्त्रं, त्रयोदश सिक्तवर्तिकाः च आसन् । मध्यरात्रः तु मम जन्मदिनस्य प्रभातः आसीत् ।

यत् घोरं भयम् उत्पन्नम् आसीत् तत् प्रेक्षानुभवरूपेण परिवृत्तम् आसीत् ।



# जन्मदिनस्य शुभाशयाः



प्रियम्
पराशरः,
जबलपुरम्

रात्रौ नववादनं जातं स्यात् । रुचेः दीपकस्य च मातापितरौ बहिः गतौ आस्ताम् । तौ बालौ पितामह्या सह गृहे आस्ताम् । नवम्बर्मासस्य नवदशः दिनाङ्कः सः । विंशतितमे दिनाङ्के पितामह्याः जन्मदिनम् । सा ८९वर्षीया वृद्धा । बालौ तां सानुरोधम् उक्तवन्तौ यत् काचित् कथा वक्तव्या इति । सा आदौ निराकरणं प्रदर्शितवती । अनन्तरकाले तु कथाकथनम् अङ्गीकृतवती ।

''वत्सौ ! यदा अहम् अल्पवयस्का आसं तदा अहमपि भवन्तौ इव पितामहीतः कथाः शृणोमि स्म । सा कदाचित् कस्याश्चित् महिलायाः कथां श्रावितवती । सा महिला विलक्षणा आसीत् । अग्रे सा परिवृत्ता जाता'' इति प्रस्तावरूपेण उक्त्वा पितामही कथाम् आरब्धवती -



पूर्वं मेरीकार्मेल्नामिका महिला निवसति स्म । तस्याः पतिः सैन्ये आसीत् । दौर्भाग्यवशात् सः युद्धे मृतः जातः । सा पुत्रवती न आसीत् । अतः सा गृहे एकाकितया वसति स्म । सा कस्मिन्नपि प्रीतिमती न आसीत् । किन्तु सर्वे तु तस्यां प्रीतिमन्तः आसन् ।

पितामही कासेन कण्ठं सम्यक् कृत्वा कथाम् अनुवर्तितवती - ''यदि कश्चित् स्वस्य जन्मदिनस्य निमित्तं तां निमन्त्रयति तर्हि सा कमपि व्याजम् उक्त्वा गृहे एव तिष्ठति स्म ।

स्वस्य जन्मदिने सा गृहात् बहिः निर्गता अटनाय । सर्वे तां सुप्रभातम् उक्तवन्तः, किन्तु कोऽपि जन्मदिनस्य शुभाशयं न अवदत्, यतः तत् तस्याः जन्मदिनम् इति कोऽपि न जानाति स्म । जनानाम् एतं व्यवहारं दृष्ट्वा सा नितरां खिन्ना - 'मया अन्ये उपेक्षया दृष्टाः यत् तस्य फलम् एतत्' इति । सा प्रार्थनामन्दिरं गतवती, ततः उद्यानं प्रति अपि । सर्वत्र तया लक्षितं यत् सर्वे मयि प्रीतिमन्तः सन्ति इति ।

सा मार्गस्य पार्श्वे विश्रान्त्यर्थं स्थापिते आसने उपविश्य विषादम् अनुभवन्ती स्वगतम् इव



के.वि.चन्दनः, चेन्नै

उक्तवती – 'हे भगवन् ! सर्वे मयि प्रीतिमन्तः । किन्तु दौर्भाग्यं नाम मया तत् न लक्षितम् । एतस्य फलतः एव अद्य मम जन्मदिने सत्यपि कोऽपि शुभाशयं न उक्तवान्, भावविनिमयं च न कृतवान् ।' रात्रेः अष्टवादनपर्यन्तं सा तत्रैव उपविष्टा आसीत्'' इति अवदत् पितामही ।

सा किञ्चित् जलं पीत्वा कण्ठं समीकृत्य कथां पुनरपि अनुवर्तितवती – ''अष्टवादनं जातम् इत्येतत् अनुलक्ष्य सा गृहं गतवती । आश्चर्यं नाम बहवः उपायनादिकं गृहीत्वा तस्याः गृहस्य पुरतः उपविष्टवन्तः आसन् । ते ताम् अन्तः नीतवन्तः । तत्र जन्मदिननिमित्तकं खाद्यम् (केक्) उत्पीठिकायाः उपरि स्थापितम् आसीत् । एतत् दृष्ट्वा सा लज्जिता । अश्रूणि स्रावयन्ती सा उक्तवती – 'कृपया अहं क्षन्तव्या' इति ।

सर्वे जन्मदिनगीतं सामूहिकतया उक्तवन्तः । ततः खाद्यवितरणं प्रवृत्तम् । तस्मात् दिनात् आरभ्य सा सर्वेषु समारम्भेषु सभासु च भागवहनम् आरब्धवती'' इति कथां समाप्य पितामही पृष्टवती – ''बालौ ! किम् एषा कथा भवद्भ्यः अरोचत ?'' इति ।

''अहो, उत्तमा कथा । रमणीया कथा'' इति उक्तवन्तौ बालौ । एतावता तयोः मातापितरौ आगतौ । पितामहीं शुभरात्रिम् उक्त्वा तौ बालौ शयनं कृतवन्तौ ।

अनन्तरदिने रात्रेः नववादनपर्यन्तं सर्वं यथापूर्वं प्रवृत्तम् । नववादने बालौ स्वागतप्रकोष्ठं प्रति आगतवन्तौ दीपान् निर्वापितवन्तौ च । दूरदर्शने धारावाहिन्याः दर्शनाय पितामही तत्र आगता । यदा सा दीपान् प्रवर्तितवती तदा बालौ प्रत्यक्षौ जातौ । जन्मदिनखाद्यम् आनीय तस्याः पुरतः गृहीत्वा सामूहिकतया जन्मदिनगीतं गीतम् । बालयोः मातापितरौ तस्यै रमणीयं वस्त्रं दत्तवन्तौ । बालौ लघुपेटिकां तस्यै दत्तवन्तौ । पितामही पेटिकाम् उद्घाटितवती । तदन्तः एका पाञ्चालिका आसीत् । तया सह स्थिते पत्रे लिखितम् आसीत् – *'प्रीतिपात्रायै कथाश्रावयित्र्यै पितामह्यै रुचिर्दीपकाभ्यां सहार्दम् उपायनीकृतम् एतत्''* इति ।

एतत् पठितवत्याः पितामह्याः नेत्राभ्याम् आनन्दाश्रूणि निर्गतानि ।



# स्वातन्त्र्यम् अमूल्यम्



पि.कार्तिक रामस्वामी, चेन्नै

''तात ! कृपया एकं शुक-युगलं दापयतु'' इति पितरं प्रार्थितवान् अहम् । ऐदम्प्राथम्येन कृता प्रार्थना न एषा । गते मासद्वये मया पिता प्रार्थितः आसीत् बहुवारम् ।

नगरे वीथीषु गमनसमये विविधान् पक्षिणः विक्रयणाय स्थापितान् दृष्टवतः मम नेत्रे विकसिते भवतः स्म । शुकेषु स्थापिता दृष्टिः तु न प्रत्यावर्तते स्म । तदा अहं चिन्तयामि स्म – 'रमणीये पञ्जरे स्थितौ शुकौ यदि मम गृहे अपि स्यातां तर्हि वरं भवेत् । तदा प्रतिदिनं प्रातः उत्थाय अहं तौ वक्तुं शक्नुयां – 'सुप्रभातम्' इति । तयोः पञ्जरं प्रतिदिनं स्वच्छीकरिष्यामि । तयोः कृते प्रतिदिनम् आहारं दास्यामि । तौ सम्भाषणं पाठयिष्यामि .... ।'

किन्तु मम मातापितरौ मह्यं शुकौ दापयितुं न इच्छतः स्म । 'यदि शुकौ क्रीतौ स्यातां तर्हि मम अध्ययनं विनष्टं भवेत्' इति भीतिः तयोः । 'पक्षिणां पालनं न सुकरम्' इति वादं कृतवन्तौ तौ । किन्तु अहं मम विचारं परिवर्तयितुं सिद्धः न जातः । अन्ते पिता मां शुकविक्रयणस्थानं प्रति नीतवान् । बहुधा परीक्ष्य पित्रा सह समालोच्य अहम् उभौ शुकौ चितवान् । तौ नितरां सुन्दरौ आस्ताम् । तयोः शरीरं हरितम् । कण्ठः पादौ च रक्तवर्णीयाः । चित्ताकर्षिके नेत्रे । मधुरः कण्ठस्वरः । अहो, रमणीयौ शुकौ एतौ !

यदा शुकाभ्यां युक्तं पञ्जरं स्वीकृत्य गृहं प्रति प्रस्थितं मम मुखं विकसितम् आसीत् । मित्राणां प्रतिवेशिबालानां च पुरतः मम शुकौ दर्पेण एव प्रदर्शितवान् अहम् ।

मात्रा सह चर्चा प्रवृत्ता - पञ्जरं कुत्र स्थापनीयम् इति विषये । अन्ते चन्द्रशालायां तत् स्थापितम् । तत्र सस्यकुण्डादयः अपि आसन् । अतः प्राकृतिकः एव परिसरः तत्र आसीत् इव ।

अहं मातरं मम अपरं स्वप्नम् उक्तवान् - ''अम्ब ! मम अन्योऽपि स्वप्नः अस्ति । मम गृहे मीनालयः अपि स्यात् । तस्मिन् सुवर्णवर्णीयौ मत्स्यौ भवेताम् । रक्तमीनः श्वेतमीनः चापि तत्र स्याताम् । तैः सह कृष्णमीनयुगलम् अपि भवेत् । एतत्सर्वं कदा दापयति भवती ?'' इति । माता तु उत्तरं किमपि अनुक्त्वा ततः निर्गतवती ।

अनन्तरदिने अन्येषाम् उत्थानतः पूर्वम् एव मया उत्थितम् । माता उक्तवती यत् इतः पूर्वं कदापि एतावच्छीघ्रं न उत्थितम् आसीत् भवता इति । अहं साक्षात् शुकयोः समीपं गतवान् । तयोः नाम कृतवान् 'तिमः', 'सिमः' चेति । ततः तौ उद्दिश्य उक्तवान् – 'सुप्रभातम्' इति । तयोः कृते मया फलानि कलायादयश्च दत्ताः । ततः अहं विद्यालयं प्रति गमनाय सन्नाहं कर्तुं गतः ।

सायं विद्यालयतः प्रत्यागत्य तिमसिमाभ्यां



सयान् चन्द्रः, कोल्कता

सह किञ्चित्कालं यापितवान् । ततः मया गृहपाठलेखनं पठनं च कृतम् । शुकयोः सहवासतः अहं नितरां सन्तुष्टः आसम् ।

त्रीणि दिनानि अतीतानि । तौ पक्षिणौ नूतनस्य परिसरस्य अनुगुणं व्यवहर्तुं प्रयतमानौ आस्ताम् । तौ मम स्वरम् अभिज्ञाय प्रतिस्पन्दं दर्शयतः स्म । तथापि तयोः नेत्रयोः काचित् कान्तिहीनता दृश्यते स्म । अथवा तथा मम मनसि भाति स्म ।

ततः चतुर्थे दिने काचित् विलक्षणा घटना प्रवृत्ता । मया प्रमुखः कश्चन निबन्धः लेखनीयः आसीत् । अतः रात्रौ दीर्घकालं यावत् कार्यं कृतं मया । निद्रा मां बाधते स्म । तां निवारयितुं प्रयतमानः अहं लिखन् आसम् । तदा मया अकस्मात् पञ्जरस्थयोः तिमसिमयोः ध्वनिः श्रुतः । तौ वदतः स्म – ''कृपया आवाभ्यां स्वातन्त्र्यं ददातु । कृपया आवां स्वतन्त्रौ करोतु'' इति । तयोः नेत्रयोः अश्रुधारा निर्गच्छति स्म । एतत् द्रष्टुं न शक्तं मया । अतः अहं दुःखेन उच्चैः अवदम् – ''प्रियौ तिमसिमौ ! क्षन्तव्यः अहम् । कृपया अहं क्षन्तव्यः'' इति ।

मां कम्पयन्ती माता अपृच्छत् – ''किम् अभवत् वत्स ?'' इति । अहं झटिति उत्थाय उपविष्टवान् । मया दृष्टः आसीत् स्वप्नः । तथापि स्वप्नतः योग्यः पाठः पठितः आसीत् । अनन्तरदिने एव अहं तिमं सिमं च समीपतमम् उद्यानं नीत्वा पञ्जरस्य द्वारम् उद्घाटितवान् । ततः निर्गच्छतोः तयोः नेत्रयोः दृष्टः आनन्दः अद्यापि स्मर्यते मया ।

''वत्स ! किं भवान् मत्स्यालयं गृहं प्रति आनेतुम् इच्छति ?'' इति आकूतगर्भस्वरेण पृष्टवती माता ।

''न अम्ब ! इतःपरं कमपि पक्षिणं पशुं वा बन्धने न स्थापयिष्यामि अहम् । ते मत्स्याः सरोवरे नद्यां वा स्वच्छन्दं विहरन्तु नाम । तेषां बन्धनं किमर्थं करणीयं मया ? मह्यं प्रतिमासं किञ्चित् धनं दीयते खलु ? तेन अहं सञ्चयं कृत्वा पञ्जरस्थं पक्षिणं, बन्धनयुक्तं पशुं वा क्रीत्वा बन्धविमुक्तं करिष्यामि । ते स्वातन्त्र्यसुखम् अनुभवन्तु नाम'' इति अवदम् । माता मां साभिमानं दृष्टवती ।



# सजीवानि वस्तूनि



प्रथा
उमेश मेहता,
गोवा

तादृशः कश्चन कालः, यत्र च सस्यादयः सजीवाः न इत्यत्र जनानां विश्वासः आसीत् । अनन्तरकाले सस्यानाम् अपि जीवः अस्ति इति विज्ञानिभिः सप्रमाणं निरूपितम् । अद्य तु कोऽपि तत् न निराकरोति । यदा दादावर्यः एतां वार्तां जिनालाम् उक्तवान् तदा सा अचिन्तयत् – 'अद्य वयं यान् निर्जीवान् वदामः तेषाम् अपि जीवः अस्ति इति निरूपितं भवेत् कदाचित् । अतः तेषां जीवः नास्ति इति चिन्तनम् अस्माकं मूर्खतायै भवेत्' इति ।

अतः सा मृन्निर्मितैः वस्तुभिः सह तादृशं व्यवहारम् आरब्धवती, यादृशः सजीवैः सह क्रियेत । 'शिलाः मौनम् आचरन्ति' इति विचिन्त्य सा शिलाभिः सह सम्भाषणाय प्रयत्नं कृतवती । काष्ठमयवस्तूनां भावनाः ज्ञातुं तया प्रयत्नः कृतः । किन्तु कोऽपि प्रयासः न सफलः । सर्वाणि निर्भावुकाणि आसन् ।

एतस्मात् सा खिन्ना । अश्रुबिन्दवः तस्याः नेत्राभ्यां निर्गताः । तदवसरे तया अकस्मात् शब्दः श्रुतः – "वत्से ! मा रोदीः" इति ।

जिनाला परितः दृष्टिं प्रसारितवती । प्रकोष्ठे





नेह
अडिग,
बेङ्गलूरु

काष्ठमयी कपाटिका, दण्डदीपः, व्यजनं, भित्तिघटी, वस्त्राणि, यानपेटिका इत्यादीनि बहूनि वस्तूनि आसन्। एतेषु कस्मात् ध्वनिः आगतः इति न अवगतं जिनालया।

प्रकोष्ठस्थेषु वस्तुषु किमपि ध्वन्युत्पादकं न इति यदा निश्चितं तदा सा वातायनात् बहिः दृष्टिं प्रसारितवती। कोऽपि विनोदाय एवं कृतवान् स्यात् इति अचिन्तयत् सा। गृहे सर्वत्र अन्वेषणं कृतं तया। दादावर्यः प्रकोष्ठे सुप्तः आसीत्। सः निद्रामग्नः दृश्यते स्म। तस्य घोरिकाशब्दः अपि श्रूयते स्म।

'कोऽपि उक्तवान् इति मया भ्रान्तिः प्राप्ता स्यात्। अथवा कोऽपि पिशाचः आगत्य एवम् उक्तवान् अपि स्यात्' इति अचिन्तयत् जिनाला। पिशाचेषु यद्यपि तस्याः विश्वासः नास्ति तथापि पिशाचनामश्रवणात् तस्याः शरीरे कम्पः उत्पन्नः। अतः नेत्रयोः उत्पन्ना अश्रुधारा, या सकृत् स्थगिता आसीत् सा, पुनः अनुवृत्ता।

''वत्से। मा रोदितु'' - पुनः सः शब्दः श्रुतः।

जिनाला परितः पश्यन्ती पृष्टवती - ''कः भवान्? कुत्र अस्ति?''

''अहम् अत्रैव अस्मि। भवत्या पुरतः एव अस्मि'' इति ध्वनिः आगतः।

''मम पुरतः कुत्र? भवान् कः?''

''भवन्तः यं वायुः इति वदन्ति, सः वायुः एव अहम्।''

जिनाला सन्तोषेण कूर्दितवती। सा वायोः आलिङ्गनं कर्तुं प्रयत्नं कृतवती।

'हे! पवनार्य! भवतः स्वरः मधुरः अस्ति। भवान् सम्भाषितुं शक्नोति किम्?''

''आं वत्से! अहं सम्भाषणं कर्तुं शक्नोमि निश्चयेन।''

''तर्हि किमर्थं जनाः चिन्तयन्ति यत् भवान् निर्जीवः, भावरहितः, सम्भाषणे असमर्थः च इति?''

''ते स्वकार्येषु नितरां निमग्नाः सन्तः मम



वचनं श्रोतुं समयम् एव न प्राप्नुवन्ति।''

''अहो, एवम्! एवं तर्हि अहं कथं भवतः वचनं श्रोतुं शक्ता अभवम्?''

''भवती तु स्नेहशीला सुन्दरी चिन्तनशीला बालिका अस्ति। अतः भवत्या मम वचनं श्रोतुं शक्तम्। अस्तु तावत्, मया अधुना गन्तव्यम् अन्यत्र। साधयामि तावत्।''

''भवतु, परन्तु कृपया पुनः मया सह सम्भाषणार्थम् आगन्तव्यं भवता।''



अधुना जिनालायाः महान् सन्तोषः आसीत् । एषः स्वप्नः उत वास्तविकता इति सा न ज्ञातवती । एतत् वास्तविकमेव इति प्रमाणीकर्तुं सा उच्चैः उक्तवती - ''कोऽपि मया सह सम्भाषणार्थं किं सिद्धः ?''

''आम् । अहम् अस्मि'' - मञ्चे शयाना पाञ्चालिका उक्तवती ।

''हे पाञ्चालिके ! भवती अपि सम्भाषणं कर्तुं शक्नोति किम् ? हे भगवन् ! अहम् एतत् न ज्ञातवती आसम् । यदा अहं कुपिता भवामि स्म तदा भवतीं क्षिपामि स्म । तदा भवती वेदनाम् अनुभूतवती स्यात् खलु !''

''अथ किम् ? महती वेदना भवति स्म ।''

''क्षम्यताम् । इतः परं तथा न करिष्यामि ।''

जिनाला पाञ्चालिकायाः शरीरम् औषधेन लिप्तवती । ते उभे अपि क्रीडितवत्यौ, हसितवत्यौ, सम्भाषणं कृतवत्यौ च ।

एतावता द्वारशब्दः श्रुतः । जिनाला द्वारम् उद्घाटयितुं गतवती । तस्याः मातापितरौ आगतवन्तौ । पुनः यदा जिनाला स्वप्रकोष्ठं गतवती तदा पाञ्चालिका पुनः निर्जीवा जाता आसीत् । जिनाला चिन्तितवती - 'प्रायः वयं मनुष्याः प्रपञ्चविषये सर्वथा चिन्तनरहिताः स्मः । अस्माकं व्यवहारतः जीवन्तः प्राणिनः अपि निर्जीवाः भवन्ति ।''



# दूर्वाससः हासः

सीतापुरस्य निवासी दूर्वासाः स्वस्य ग्रामस्य धनिकेषु अन्यतमः आसीत् । तस्य गृहे पूर्वजैः सञ्चिता सम्पत् प्रभुता आसीत् । तस्य एकं महत् गृहम् आसीत् । विशालायाः कृषिभूमेः स्वामी अपि आसीत् सः । एका विशाला आम्रवाटिका अपि आसीत् तस्य । एतस्मात् कारणात् ग्रामे सर्वे तं महता आदरेण पश्यन्ति स्म । यद्यपि तस्य वास्तविकं नाम रामचन्द्रः इति आसीत्, तथापि शीघ्रकोपशीलतायाः कारणतः सर्वे तं दूर्वासाः इति नाम्ना एव निर्दिशन्ति स्म । सः अविचार्य मुखे उद्गतं सर्वं वदति स्म । दूर्वासाः इति नाम्नः निवारणाय सः कदापि प्रयत्नं न कृतवान् एव । यतः सः तत् नाम भूषणं मन्यते स्म ।

दूर्वाससः अपत्यत्रयम् आसीत् । द्वे पुत्र्यौ एकः पुत्रश्च । पुत्र्योः विवाहं कृत्वा सः ते पतिगृहं प्रति प्रेषितवान् । बान्धवाः अपि तस्य स्वभावं सम्यक् जानन्ति स्म । पत्नीं तु सः आदिनं तर्जयति स्म । प्रातः उत्थानात् आरभ्य तस्य तर्जनवचनानां निरन्तरश्रवणस्य अभ्यासः जातः आसीत् तस्याः ।

परन्तु पुत्राय किरीटाय पितुः एषः स्वभावः सर्वथा न रोचते स्म । सः विवाहवयस्कः अपि अभवत् । परन्तु तस्य मनसि भयम् आसीत् । सर्वदा सः चिन्तयति स्म – 'एतेन शीघ्रकोपिना पित्रा सह मम भाविनी पत्नी कथं वा अत्र जीवेत् ? उभयोर्मध्ये सर्वदा मनस्तापः भवेत् एव । न ज्ञायते भविष्यस्य गर्भे किं किं गोपितम् अस्ति' इति । पितुः वचनानुसारम् एव तस्य विवाहः सम्पन्नः ।

अरविन्दा एकस्य सम्पन्नकृषिकस्य एकमात्रपुत्री आसीत् । मातापितरौ तां महत्या प्रीत्या पोषितवन्तौ आस्ताम् । तया किमपि कार्यं न कारयतः स्म तौ ।

विवाहस्य अनन्तरदिने एव किरीटः अरविन्दां पितुः स्वभावविषयम् आद्यन्तम्

कात्यायिनी



उक्तवान् । अनन्तरं सः एतदपि उक्तवान् यत् भवत्या सर्वं मौनेन सोढव्यं, कदापि विरोधः न करणीयः इति । नूतनतया स्नुषा गृहम् आगतवती अस्ति इति कारणेन दूर्वासाः द्वित्राणि दिनानि यावत् स्वकोपप्रवृत्तिं कथञ्चित् निगृहीतवान् । अनन्तरं सर्वेषां पुरतः अवाच्यैः शब्दैः कर्मकराणां तर्जनम् आरब्धवान् ।

एकस्मिन् दिने अरविन्दा श्वश्र्वा दत्तं चषकपूर्णं क्षीरं गृहस्य पृष्ठभागतः आनयन्ती आसीत् । एतत् दृष्ट्वा एव दूर्वासाः उच्चैः तर्जनम् आरब्धवान् – ''भवत्याः श्वश्र्वाः किं जातम् अस्ति ? स्वयं दुग्धकलशः आनीयते चेत् तस्याः कटिभङ्गः भवेत् किम् ?'' इति ।

वस्तुस्थितिः तु एषा आसीत् यत् सः नूतनस्नुषया कार्यकरणं न इच्छति स्म । परन्तु तस्य रूक्षेण स्वरेण, कटुना वचनेन च अरविन्दा भयकम्पिता जाता । अतः तस्याः हस्तात् कलशः पतितः । सर्वं क्षीरं नष्टं जातम् । भीता अरविन्दा रुदती गृहस्य अन्तः धावितवती । एतस्याः आकस्मिकघटनातः दूर्वासाः क्षणं यावत् स्तब्धः जातः ।

परेद्यवि मध्याह्ने दूर्वासाः गृहाङ्गणे उपविश्य केनचित् सह सम्भाषमाणः आसीत् । तदा तेन किञ्चन काचकपात्रं मार्जयन्ती अरविन्दा दृष्टा ।

अनुक्षणमेव क्रोधमिश्रितेन स्वरेण सः गर्जितवान् – ''सर्वे कर्मकराः कुत्र दिवं गताः ? सर्वे आकण्ठं भुक्त्वा उद्गिरन्तः भवन्ति । परन्तु किञ्चिदपि कार्यं न कुर्वन्ति । चर्मच्छेदः कृतः चेदेव एतैः विवेकः प्राप्येत । किं कोऽपि मम कथनं शृण्वन् अस्ति ?'' इति ।

श्वशुरस्य क्रोधम् आवेशं च दृष्ट्वा अरविन्दा नितरां भीता जाता । तस्याः हस्तात् तत् पात्रं पतितं, भग्नं च जातम् । एवं देशविदेशेभ्यः आनीतानि पात्राणि एकैकशः नष्टानि जातानि । एतस्मात् ऐदम्प्राथम्येन आत्मनः शीघ्रकोप-स्वभावविषये लज्जा अनुभूता दूर्वाससा । आत्मनः विषये एव कुपितः सः ।

अन्यस्मिन् दिने अरविन्दा श्वश्रूश्वशुरयोः कृते भोजनं परिवेषयन्ती आसीत् । तदा दूर्वासाः एकं व्यञ्जनं मुखे स्थापितवान् । अनन्तरक्षणे एव तेन तर्जनम् आरब्धम् – ''किं लवणस्य क्षामः अस्ति एतस्मिन् गृहे ? मातृगृहे पाककार्यं तु न अभ्यस्तवती स्यात् भवती । भवतु नाम । परिवेषणम् अपि किं न ज्ञायते ?'' इति ।

श्वशुरस्य एतानि क्रोधवचनानि श्रुत्वा भयेन

कम्पमाना सा यदा ततः गन्तुम् उद्युक्ता तदा तस्याः हस्ते विद्यमानं पात्रम् अधः अपतत् । सा ततः धावन्ती गत्वा प्रकोष्ठं प्रविश्य आच्छादकेन आत्मानम् आच्छाद्य सुप्तवती । दूर्वाससः मनसि भावना उत्पन्ना यत् मया अकार्यं कृतम् इति । 'मधुरैः वचनैः वक्तुं शक्यम् आसीत् - पाके लवणं न्यूनम् उत अधिकम् इति । एतदर्थं क्रोधं कुर्वता मया स्नुषायै बहु कष्टं दत्तम्' इति चिन्तयन् सः स्वदोषविषये महान्तं पश्चात्तापम् अनुभूतवान् ।

तदारभ्य श्वशुरस्य ध्वनेः श्रवणमात्रेण एव अरविन्दा कम्पमाना भवति स्म । तस्याः हस्ते विद्यमानं यत्किमपि वस्तु अधः पतति स्म । स्नुषायाः एतस्मात् व्यवहारात् दूर्वासाः चिन्ताक्रान्तः जातः । सः वैद्यम् आनायितवान् ।

वैद्यः अरविन्दया सह किञ्चित्कालं वार्तालापं कृत्वा दूर्वाससम् एकान्ते आहूय उक्तवान् - ''भवतः स्नुषा भवतः एकैकस्मात् अपि वचनात् भयम् अनुभवति । तस्याः स्वभावः एव तथा अस्ति । भवान् यदि शान्तस्वरेण वदेत् तर्हि समीचीनम् । तदा एव सा अपि सम्यक् भविष्यति'' इति ।

दूर्वाससः मनसि अभासत यत् वैद्यस्य वचने सत्यांशः अस्ति इति । सः स्नुषायाः विषये, स्वस्य स्वभावस्य विषये च पुनः पुनः चिन्तनं कृतवान् । एतस्मात् गच्छता कालेन तस्मिन् परिवर्तनं जातम् ।

दीपावलीपर्वावसरे तस्य पुत्रयोः परिवार-सदस्याः सर्वे आगताः आसन् । ते सर्वे सन्तोषेण गृहाङ्गणे उपविश्य हसन्तः सम्भाषणं कुर्वन्तः आसन् । पुत्री-जामातृ-दौहित्रादिभिः सह दूर्वाससः पत्नी अपि उपविष्टवती आसीत् । तस्मिन् समये दूर्वासाः गृहस्य अन्तः आगतवान् । अनुक्षणं सर्वे तूष्णीम् अभवन् । सर्वेषां मुखं पिहितं जातम् । सर्वे उत्थाय अन्तः गमनाय यदा उद्युक्ताः तदा दूर्वासाः हसन् उक्तवान् - ''अद्य अहम् अपि भवद्भिः सह हसामि, शान्तस्वरेण मधुराणि वचनानि वदामि च । यदि अहं कुपितः भवामि तर्हि अपि भवन्तः भीताः मा भवन्तु । अदृश्याः न भवन्तु । मम विरोधम् आचरन्तु । आगच्छन्तु, सर्वे उपविशन्तु, सन्तोषेण वार्तालापं करवाम'' इति ।

दूर्वाससः एतस्मत् वचनात् सर्वे सन्तुष्टाः सन्तः युगपत् हसितवन्तः । तस्मात् दिनात् गृहस्य वातावरणे महत् परिवर्तनं जातम् ।



# काश्मीरराज्यीया जानपदकथा

जम्मुकाश्मीरराज्यं भारतस्य उत्तर-भागान्त्ये अस्ति । अत्रत्याः हिमालयीयाः पर्वताः १८००० पादोन्नतमिताः सन्ति । अत्रैव काश्मु-उपत्यका अन्तर्हिता अस्ति । झेलंनदी भूमिं विभजन्ती राजमार्गं निर्मितवती अस्ति अत्र । एषा अत्रत्यजनानां जीवनधारा अपि अस्ति ।

एतस्मात् कारणात्, जीववैविध्यस्य कारणतः च एतत् राज्यं 'भूस्वर्गः' इति प्रख्यातम् अस्ति । काश्मीरोपत्यकायां स्थिताः 'चिनार'नामकाः वृक्षा चित्ताकर्षकाः सन्ति । एते वृक्षाः काश्मीरोपत्यकायां बाहुल्येन दृश्यन्ते । चिनारवृक्षाः अत्यन्तम् उन्नताः भवन्ति । ऋतुम् अनुसृत्य एतेषां पर्णानि वर्णपरिवर्तनं प्राप्नुवन्ति ।

अत्रत्यानि अरण्यानि ऐबेक्स्पक्षिणां, हिमतरक्षूणां, कस्तूरीमृगाणां, वृकाणां, रक्तभल्लूकानां, कृष्णमृगाणां, याक्प्राणिनां, वन्यरासभानां च निवासस्थानानि सन्ति ।

अस्मिन् राज्ये प्रमुखतया सिन्धुः, चीनाब्, झेलं, रावी इत्यादयः नद्यः प्रवहन्ति । अत्र असंख्याकाः प्रवाहाः, सरोवराः च द्रष्टुं शक्याः ।

मन्दिराणां कारणतः जम्मु बहु प्रसिद्धं जातम् अस्ति । 'बहुमाता'मन्दिरं रघुनाथ-मन्दिरं च जम्मुनगरस्य प्रसिद्धे मन्दिरे ।

# अमूल्यम् उपायनम्

हिमाचलपर्वतानां निकटे कश्चन लघुः ग्रामः आसीत् । ग्रामस्य तिसृषु दिक्षु दुर्गमः भूभागः आसीत् । चतुर्थ्यां दिशि महान् सरोवरः कश्चन आसीत् । अतः सः ग्रामः गन्तव्यः चेत् सरोवरम् अतिक्रम्य एव गन्तव्यम् आसीत् । किन्तु कदाचित् वर्षं यावत् सः सरोवरः घनीभूतः भवति स्म ।

यद्यपि यातायातसमस्या आसीत्, तथापि ग्रामः स्वावलम्बी आसीत् । यत् अपेक्षितं तत् ग्रामीणैः विना क्लेशं प्राप्यते स्म । अपेक्षितं वस्तु ते परस्परविनिमयव्यवस्थया



प्राप्नुवन्ति स्म ते ।

वर्षस्य अष्ट मासान् यावत् सरोवरः घनरूपेण तिष्ठति स्म इत्यतः तस्मिन् समये देशस्य इतरभागतः सः ग्रामः विच्छिन्नः भवति स्म । धनदानस्य, धनेन व्यवहरणस्य वा आवश्यकता एव न आसीत् तेषाम् । अतः नवदशे शतके अपि तस्य ग्रामस्य जनाः नाणकं न दृष्टवन्तः आसन्, न वा श्रुतवन्तः आसन् ।

एकस्मिन् दिने प्रातः कश्चन ग्रामीणः एकं नाणकं प्राप्तवान् । वस्तुतः कश्चित् पक्षी नाणकं गृहीत्वा डयमानः आकस्मिकतया नाणकं पातितवान् आसीत् । नाणकस्य एकस्मिन् पार्श्वे तस्य देशस्य राज्ञः चित्रम् आसीत् । अपरस्मिन् पार्श्वे राजलाञ्छनम् आसीत् । नाणकं स्वीकृत्य किं करणीयम् इति सः ग्रामीणः न अवगतवान् ।

तत्रैव स्थितः कुम्भकारः सूचितवान् - ''ग्रामप्रमुखस्य समीपं नयतु एतत् । किं करणीयम् इति सः जानीयात्'' इति ।

''आम्, आम् । नाणकस्य का व्यवस्था करणीया इत्यत्र सः योग्यं मार्गं दर्शयति'' इति धीवरः अनुमोदनं कृतवान् ।

अतः सः ग्रामीणः नाणकं स्वीकृत्य ग्रामप्रमुखस्य समीपं गतवान् । ग्रामप्रमुखः तस्मिन् ग्रामे एव अत्यन्तं बुद्धिमान् इति ख्यातः आसीत् ।

नाणकं दृष्ट्वा सः अपि आश्चर्यचकितः अभवत् । आकस्मिकतया लब्धं प्रकाशमानं गोलाकारकं लोहस्य वस्तु दृष्ट्वा ग्रामीणाः कुतूहलभरिताः अभवन् ।



ग्रामस्य चतुष्पथे ते सर्वे सम्मिलिताः अभवन् । तत्र नाणकस्य विषये महती चर्चा अभवत् । 'श्वः ग्रामप्रमुखेण परिहारः सूचनीयः' इति सर्वैः निर्णीतम् ।

ग्रामप्रमुखः समस्याम् अधिकृत्य सविस्तरं चिन्तनं कृतवान् । सः विश्रान्तिरहितं दिनं, निद्रारहितां रात्रिं च यापितवान् । अन्ते तस्य मनसि कश्चन परिहारः स्फुरितः ।

सः सम्मिलितान् जनान् उद्दिश्य सुदीर्घं भाषणं कृतवान् । ''मित्राणि ! अस्माभिः दृष्टं प्रथमं नाणकम् एतत् । अत्र अस्माकं राज्ञः चित्रमपि अस्ति'' इति उक्त्वा शिरसा नाणकस्थं राज्ञः चित्रं नमस्कृतवान् ।

अग्रे सः - ''भगवान् अस्माकं राजानं सकलसम्पदा अनुगृह्णातु । मम मतानुसारम् अस्माभिः एतत् नाणकं महाराजाय उपायन-



# श्रेष्ठः केसरः



केसरः उपस्करेषु अत्यन्तं श्रेष्ठः महार्घः च । मूलतः काश्मीरस्य श्रीनगरसमीपस्थे पाम्पोरप्रदेशे एतस्य वर्धनं भवति । आ बहुभ्यः शतकेभ्यः अत्रत्येषु प्राचीनक्षेत्रेषु केसरस्य उत्पादनं प्रचलति ।

केसरस्य उत्पादनार्थं या योग्या मृत्तिका, योग्यं वातावरणं च आवश्यकं तदुभयं काश्मीरे अस्ति । नीललोहितानि पुष्पाणि वृक्षे एकलानि भवन्ति, न तु गुच्छरूपेण । तानि पुष्पाणि पीतान् केसरान् वहन्ति । एताः केसरशलाकाः यदा शोष्यन्ते तदा अद्वितीयोपस्करतां प्राप्नुवन्ति । किलोपरिमितस्य केसरस्य निर्माणार्थं १,५०,००० केसराः शोषणीयाः भवन्ति ।

रूपेण समर्पणीयम् । एतदेव योग्यं भवेत्'' इति उक्तवान् ।

ग्रामीणाः ग्रामप्रमुखस्य निर्णयम् ऐकमत्येन अङ्गीकृतवन्तः । तेषाम् अग्रिमः चर्चाविषयः आसीत् - ''उपायनम् अत्यन्तोत्कृष्टतया राज्ञे कथं समर्पणीयम् ?'' इति ।

ग्रामप्रमुखः पुनश्च एकां सूचनां दत्तवान् । ''एतादृशम् अपूर्वम् उपायनम् अलङ्कृतायां शिबिकायां स्थापयित्वा नेतव्यम् । तां शिबिकां ग्रामस्य षट् ज्येष्ठाः वहेयुः'' इति । शिबिकया सह कैः गन्तव्यम् इति ग्रामप्रमुखः एव सूचितवान् ।

एवं ग्रामस्थाः सर्वे मिलित्वा शिबिका-निर्माणार्थं सन्नद्धाः अभवन् । काष्ठच्छेदकः अत्युत्तमं काष्ठं छित्वा आनीतवान् । तक्षकः परिश्रमेण कार्यं कृत्वा सुन्दरीं शिबिकां निर्मितवान् । कटनिर्माता उत्तमेन ऊर्णेन सुन्दरम् आस्तरणं कृतवान् ।

तन्तुवायाः उत्तमेन कौशेयेन जवनिकां शिबिकायाः उपरि प्रसारितवन्तः । ऊर्णस्य आस्तरणं जागरूकतया शिबिकायाः अन्तः प्रसारितम् ।

ग्रामप्रमुखः शिबिकां वोढुं ज्येष्ठानां नामानि घोषितवान् । ग्रामस्थाः सर्वे एकत्र मिलेयुः इति सः सूचितवान् । सर्वेषां सम्मुखे सः तत् नाणकं कौशेयवस्त्रस्य अन्तः स्थापयित्वा तत् कौशेयवस्त्रं जागरूकतया आस्तरणस्य उपरि स्थापितवान् । नवोढा वधूः पतिगृहं प्रति यथा प्रेष्यते तथा नाणकविषये तेषां व्यवहारः आसीत् ।

सरोवरं क्रान्तुं नौका सज्जीकृत्य स्थापिता आसीत् । नौकां प्रति शिबिकायाः नयनावसरे महिलाः गीतं गायन्त्यः महाराजस्य नाम वदन्त्यः जयघोषं कुर्वन्ति स्म । नौका पुष्पैः अलङ्कृता आसीत् ।

ते शिबिकां जागरूकतया नौकायां

स्थापितवन्तः । ग्रामस्थाः आप्रच्छनपूर्वकं हस्तं चालितवन्तः । नौकातः ग्रामप्रमुखः अपि प्रत्युत्तररूपेण हस्तं चालितवान् ।

शिबिकायाः स्थापनार्थम् उत्तमा व्यवस्था कृता आसीत् । शिबिकायाः विषये सर्वे जनाः विशेषादरं प्रदर्शयन्ति स्म । कोऽपि शिबिकायाः पुरतः पृष्ठं प्रदर्श्य न तिष्ठति स्म, न वा उपविशति स्म । सायं ते एकं दीपं ज्वालितवन्तः । प्रातःकालपर्यन्तं सः दीपः ज्वलति स्म । तेषु कश्चित् आरात्रि निद्राम् अकृत्वा शिबिकायाः रक्षणं कृतवान् ।

यदा अन्याः नौकाः मार्गे मिलन्ति स्म तदा तत्रत्याः जनाः कुतूहलेन शिबिकायाः विषये पृच्छन्ति स्म । किन्तु ग्रामीणाः 'राज्ञे दातुम् अमूल्यम् उपायनं नयन्तः स्मः' इति उक्तवन्तः । कीदृशम् उपायनम् इति तैः न उक्तम् ।

तृतीये दिने प्रातः ते राजधानीं प्राप्तवन्तः । नद्याः तीरे ते ज्येष्ठाः शिबिकां स्कन्धे आरोपितवन्तः । गौरवप्रदर्शनार्थं तैः पादरक्षाः अपि निष्कासिताः । ते राजसभायाः सम्प्रदायानुसारम् एकं वस्त्रं पृष्ठभागे बद्धवन्तः । चत्वारः शिबिकां वहन्ति स्म । अग्रे एकः राजध्वजं हस्तेन गृहीत्वा गच्छन् आसीत् । ग्रामप्रमुखः महता विनयेन बद्धाञ्जलिः भूत्वा शिबिकायाः पृष्ठभागे गच्छन् आसीत् ।

अमूल्यम् उपायनं नयन्तः स्मः इति भावेन ते सर्वे सन्तोषेण आसन् । पथिकाः तेषां सम्भ्रमं दृष्ट्वा नितरां प्रभाविताः आसन् ।

नगरद्वारे करसङ्ग्राहकः शिबिकायाः अन्तः किम् अस्ति इति द्रष्टुम् इष्टवान् । किन्तु ग्रामप्रमुखः तस्य अवरोधं कुर्वन् अन्तः दृष्टिपातमपि निराकृतवान् । सः – ''उपायनं प्रथमं राजा एव पश्येत् । केनापि अन्तः न द्रष्टव्यम्'' इति उक्तवान् ।

एते ग्रामीणाः अन्तः दृष्टिप्रसाराय अनुमतिं न दद्युः इति करसङ्ग्राहकः अवगतवान् । अतः सः नगरप्रवेशार्थं तेभ्यः अनुमतिं दत्तवान् ।

राजगृहस्य प्राप्त्यर्थं तया लघ्व्या शोभायात्रया मुख्यमार्गेषु गन्तव्यम् आसीत् । केचन मुग्धाः ग्रामीणाः राज्ञे दातुम् शिबिकायाम् उपायनं नयन्तः सन्ति इति वार्ता वनाग्निवत् सर्वत्र प्रसृता । कुतूहलभरिताः बहवः जनाः मार्गेषु शिबिकां, रहस्यमयम् उपायनं च द्रष्टुं सम्मिलिताः ।

यदा राजगृहं प्राप्तं तदा ते आगमनोद्देशं रक्षकान् सूचितवन्तः । राजा तेभ्यः अन्तः आगन्तुम् अनुमतिं दत्तवान् ।

''अतिथीनां विषये यथा तथा एतैः सह





गौरवेण व्यवहरणीयम्'' इति राजा भटान् सूचितवान् ।

राजोपचारं दृष्ट्वा ते ग्रामीणाः आनन्देन पुलकिताः अभवन् । ज्ञातान् सर्वान् शब्दान् उपयुज्य ते राज्ञः प्रशंसां कृतवन्तः ।

राजगृहस्य प्रवेशानन्तरं तु ते शिबिकायाः विषये अत्यन्तं गौरवं प्रदर्शयन्ति स्म । रक्षकाः, इतरे जनाः च सन्देहं प्राप्तवन्तः आसन् । तथापि ग्रामीणाः अवमाननं कुर्युः इति मत्वा ते मौनम् आश्रितवन्तः ।

तन्मध्ये वैभवपूर्णेन उपचारेण ग्रामीणाः आनन्दसागरे निमग्नाः आसन् । ग्रामप्रमुखः – 'राजा अस्माकम् उपायनं दृष्ट्वा कं प्रतिस्पन्दं प्रदर्शयेत् ? अस्मभ्यं दातुं तस्य दृष्ट्या कः पुरस्कारः योग्यः स्यात् ?' इति चिन्तनं कुर्वन् आसीत् । सः अन्यैः ग्रामज्येष्ठैः सह एतद्विषये समालोचनं कृतवान् । ग्रामज्येष्ठाः विविधान् अभिमतान् प्रकटितवन्तः ।

राजा मध्याह्नस्य विश्रान्तिं समाप्य ग्रामीणैः मेलितुम् इष्टवान् । राज्यस्य प्रधानमन्त्री इतरे गौरवान्विताः सभासदः च राजसभायाम् उपस्थिताः आसन् ।

ग्रामप्रमुखः अग्रे आगत्य राजानं सगौरवं नमस्कृतवान् । ज्येष्ठाः महता गौरवभावेन शिबिकां भूमौ स्थापितवन्तः ।

ग्रामप्रमुखः विनयेन महाराजम् उद्दिश्य – ''महाराज, वयं सरोवरस्य अपरपार्श्वे स्थितात् सुदूरात् ग्रामात् भवतः राजधानीं प्रति आगतवन्तः स्मः । भवते एकम् अपूर्वम् उपायनं समर्पयितुम् इच्छामः वयम् । कर्तव्यबुद्ध्या एतत् दूरं वयम् आनन्देन अतिक्रान्तवन्तः स्मः । अस्माकं नम्रं निवेदनम् अस्ति यत् एतत् उपायनं भवतः पदतले समर्पयितुम् अनुमतिः दातव्या इति'' इति ।

तदा राजा – ''महान् सन्तोषः । भवतां राजभक्तिं दृष्ट्वा अहं प्रभावितः अस्मि । मदर्थं सुदूरात् आगतैः भवद्भिः महत् कष्टं सोढम् । मम महान् आनन्दः अस्ति । भवन्तः इदानीम् आत्मना आनीतं तत् उपायनं समर्पयितुम् अर्हन्ति'' इति उक्तवान् ।

अनन्तरं ग्रामप्रमुखः जवनिकाम् अपसारितवान् । शिबिकायाः अन्तः हस्तं प्रसारितवान् । अन्धवत् इतस्ततः हस्तं चालयित्वा सः महतीं सम्भ्रान्तिं प्राप्य समग्रं जवनिकाम् अपसार्य अन्विष्टवान् । इतरज्येष्ठान् आहूय कर्णे मन्दस्वरेण किमपि उक्तवान् ।

ते अपि शिबिकां परितः स्थित्वा अन्विष्टवन्तः । किन्तु किमपि न प्राप्तम् । पुनः पुनः शिबिकायाम् अन्वेषणं कृतं चेदपि तत् अमूल्यम् उपायनं तैः न प्राप्तम् ।

प्रधानमन्त्रिणः सहना नष्टा । सः – ''इतोऽपि कियान् समयः अपेक्षितः ? अनागरिकाः भवन्तः । महाराजस्य अन्यानि महत्त्वयुतानि कार्याणि बहूनि सन्ति'' इति उक्तवान् ।

ग्रामीणाः किमपि कर्तुम् अशक्ताः । त्वरायां ते शिबिकां तथा गृहीतवन्तः आसन् येन नाणकं सहजरूपेण अधः पतितं स्यात् ।

राज्ञः अवमाननम् अभवत् इत्यतः प्रधानमन्त्री तान् ग्रामीणान् दण्डयितुम् इच्छति स्म । सः महाराजं निवेदितवान् – 'एते कारागृहं प्रति प्रेषणीयाः' इति ।

तदा ग्रामप्रमुखः राजानम् उद्दिश्य – ''कथं वा वयं भवन्तम् अवमानयितुम् अर्हेम ? अहं भवतः दयां प्रार्थये, प्रवृत्तस्य निवेदनाय अनुमतिं च प्रार्थये'' इति उक्तवान् ।

राजा ज्ञातवान् यत् 'एते ग्रामीणाः सरलाः निष्कपटाः च, एते उपायनं दातुम् इष्टवन्तः, अवमानं कर्तुं न' इति । तथापि सः तान् परीक्षितुम् इष्टवान् ।

''एतान् सर्वान् प्रकोष्ठे स्थापयन्तु । रात्रिभोजनस्य निर्माणार्थम् आवश्यकानि वस्तूनि एतेभ्यः यच्छन्तु'' इति सः भटान् आज्ञापितवान् ।

अधिकारिभिः तेभ्यः अग्निशलाकाः दत्ताः आसन् । मुग्धाः ग्रामीणाः तासाम् उपयोगेन अग्निज्वालनं न जानन्ति स्म । अतः ते यत् अपक्वरूपेण खादितुं शक्यं तत् एव खादितवन्तः ।

यदा राजा एतं विषयं श्रुतवान् तदा ग्रामीणानां मुग्धताम् अवगतवान् । सावधानेन तेषां कथां श्रुतवान् । तेषां सरलं विश्वासं दृष्ट्वा मनसा हसितवान् । अनन्तरं सः तेभ्यः एकं रजतनाणकं दत्त्वा प्रतिस्वीकृतवान् । ''इदानीं भवताम् अमूल्यम् उपायनं मया प्राप्तम्'' इति उक्तवान् ।

राजा तेभ्यः योग्यानि उपायनानि दत्त्वा तेषां ग्रामस्य भूकरं न्यूनीकृतवान् । ग्रामीणाः पुनः पुनः राज्ञे कृतज्ञतां समर्प्य राजगृहतः प्रस्थिताः ।

ग्रामं प्राप्तवन्तः ते ग्रामीणान् प्रवृत्तं सर्वं विवृत्य कारागृसगमनात् वयं कथं रक्षिताः अभवाम इति विवरणं कृतवन्तः ।



# भारतम् अवगम्यताम्

१. पश्चिमवङ्गराज्यस्य चित्तरञ्जनकार्यागारे रेल्वे-इञ्जिन् उत्पादनं कुर्वन्ति । तत्र प्रथमं वाहनं कदा निर्मितम् ?
(अ) १९५०-५१ (आ) १९५५-५६
(इ) १९५९-६० (ई) १९६१-६२

२. कया भाषया अशोकस्य शासनं लिखितम् ?
(अ) मागधीभाषया (आ) ब्राह्मीभाषया
(इ) शौरसेन्या (ई) पालीभाषया

३. अखिलभारतहरिजनसङ्घस्य संस्थापकः कः ?
(अ) बि.आर्. अम्बेड्करः
(आ) गान्धिवर्यः
(इ) जगजीवनरामः
(ई) डि.के. कर्वे

४. कः साधुः जात्या चर्मकारः आसीत् ?
(अ) कबीरः (आ) साधनः
(इ) रविदासः (ई) नामदेवः

५. केन्द्रशासितेषु राज्येषु किं राज्यं बृहत् अस्ति ?
(अ) देहली (आ) पाण्डिचेरि
(इ) अण्डमान्निकोबर्द्वीपः
(ई) चन्दीगढ्



६. उपरि दत्ते भावचित्रे स्थितः राष्ट्रनायकः कः इति किं ज्ञातुं शक्नुयुः भवन्तः ?

७. निष्ठावता यवनभक्तेन दिने कतिवारं प्रार्थना करणीया ?
(अ) द्विवारम् (आ) त्रिवारम्
(इ) चतुर्वारम् (ई) पञ्चवारम्

८. कस्मिन् राज्ये अधिकसङ्ख्याकानि यन्त्रागाराणि सन्ति ?
(अ) तमिलनाडु
(आ) महाराष्ट्रम्
(इ) गुजरात्
(ई) आन्ध्रप्रदेशः

*(उत्तराणि अग्रिमे मासे)*

### *'अक्टोबर्'मासस्य प्रश्नानाम् उत्तराणि*

*१. छत्तीसगढ, रायपुर ।*
*२. राजस्थानम् ।*
*३. लार्ड हार्डिङ्ग्।*
*४. सुन्दरलालबहुगुणेन ।*
*५. कर्नूल् ।*
*६. १९११*



# विघ्नेश्वरः

एवं कोलाहले प्रचलति सत्यपि सः कर्मकरः तु निश्चिन्ततया शयनं कृतवान् आसीत् । तस्य पार्श्वे सर्वपुष्पादिभिः अलङ्कृता गणेशमूर्तिः आसीत् । तत्रत्या समग्रा भूमिः इक्षुरसपूर्णा सती पङ्किला इव जाता आसीत् ।

रक्षकभटान् आहूय यदा पृष्टं तदा ते उक्तवन्तः - ''मध्यरात्रपर्यन्तं वयं जागरिताः एव आस्म । किन्तु तदनन्तरं कदा आकस्मिकतया निद्रा प्राप्ता इति तु अस्माभिः एव न ज्ञायते । एतदभ्यन्तरे गजस्य घीङ्कारं श्रुत्वा वयं जागरिताः । रात्रेः मन्दप्रकाशे अस्माभिः कश्चन श्वेतः गजः दृष्टः । तस्मात् वयं भीताः । अतः वयं ततः पलायितवन्तः'' इति ।

एतत्सर्वं दृष्टवतः भूस्वामिनः मनः परिवृत्तम् । सः कर्मकरं साष्टाङ्गं प्रणम्य क्षमां प्रार्थितवान् । भूस्वामिनः पत्नी विघ्नेश्वरमूर्तिं प्रणमन्ती अवदत् - ''हे भगवन् ! बहूनां वर्षाणाम् अनन्तरं भवता अस्मासु कृपा कृता । वयं धन्याः स्मः'' इति ।

एतस्याः अपूर्वघटनायाः श्रवणात् तत्र जनाः बहवः सम्मिलिताः । गजस्य पदानि यत्र स्थापितानि आसन् तत्र गर्ताः जाताः आसन् । तेषु इक्षुरसः सङ्गृहीतः आसीत् । तं जनाः तीर्थरूपेण भक्त्या स्वीकृतवन्तः । रसस्य निष्कासनानन्तरं यत् श्वेतरूपम् इक्षुकल्कम् आसीत् तत् प्रसादरूपेण स्वीकृतवन्तः ते ।

कर्मकरस्य पत्नी पुत्रेण सह विघ्नेश्वरं प्रणमन्ती अवदत् - ''भगवन् ! मया अद्यावधि भवते एकं पत्रं पुष्पं वा न अर्पितम् । भवतः पूजा न कृता । भवतः निमित्तं प्रेषितः इक्षुदण्डः अपि भवता न प्राप्तः । भवान्



गजरूपेण वा बहुभ्यः दर्शनं दत्तवान् । किन्तु भवता मह्यं तु दर्शनं न दत्तम् । अहं तु गभीरायां निद्रायां निमग्ना आसम्'' इति । एतावत् उक्त्वा सा बालिका इव उच्चैः रोदनम् अकरोत् ।

तदनन्तरक्षणे एव यत्र विघ्नेश्वरप्रतिमा आसीत् तत्र इक्षुदण्डहस्तः विघ्नेश्वरः प्रत्यक्षः जातः । कर्मकरः यम् इक्षुदण्डं नीतवान् आसीत् सः एव आसीत् गणेशस्य हस्ते ।

विघ्नेश्वरः कर्मकरं शुण्डया स्वसमीपम् आकृष्य अभयहस्तमुद्रया तदीयं शिरः स्पृशन् अवदत् - ''वत्स ! आचार-व्यवहार-जाति-वर्णादीन् अहं कदापि न सृष्टवान् । ते सर्वे मानवैः सृष्टाः । मम दृष्ट्या तु धनिक-निर्धनभेदः, उच्चनीचभेदः वा नास्ति । अतः एव मया भवते दर्शनं दत्तम्'' इति । तदनन्तरं सः अन्तर्हितः जातः ।

सर्वे कर्मकरं नमस्कुर्वन्तः उक्तवन्तः - ''भवत्कारणतः वयम् अपि गणेशदेवस्य दर्शनं प्राप्तवन्तः'' इति ।

पावनमिश्रः एतैः वचनैः कथां समापयन् अवदत् - ''सहस्रेक्षुः इत्यत्र सहस्रशब्दः सहस्राधिकतां द्योतयति । तावतः इक्षुदण्डान् गणेशः निष्पीडितवान् इत्यतः सः 'सहस्रेक्षुः' जातः । एतदनन्तरम् अत्र इक्षुहस्तस्य गणपतेः प्रतिमा उत्कीर्णा । सः सहस्रेक्षुः गणपतिः भक्ताभीष्टप्रदायकः अस्ति । अतः जनाः तं भक्त्या पूजयन्ति'' इति ।

पावनमिश्रेण मन्दिरस्य मण्डपे चित्रितानां सर्वेषां चित्राणां कथा श्राविता आसीत् । किन्तु मुखमण्डपे स्थितस्य चित्रस्य कथा तु न श्राविता आसीत् । प्रतिदिनं तत्रत्यं चित्रं निर्निमेषं पश्यन् स्थितः कश्चन युवकः पावनमिश्रस्य समीपम् आगत्य चरणस्पर्शपूर्वकं प्रणम्य अवदत् - ''महाशय ! एतस्मिन् मन्दिरे केन शिल्पिना चित्राणि उत्कीर्णानि ? तस्य महाशिल्पिनः कथायाः श्रवणे महदस्ति मे कुतूहलम् । मुखद्वारे स्थितस्य चित्रस्य कथाम् अपि श्रोतुम् इच्छामि अहम्'' इति ।

पावनमिश्रः तं वात्सल्यपूर्णया दृष्ट्या पश्यन् अवदत् - ''वत्स ! भवतः कथनात् ज्ञायते यत् भवान् अपि कश्चन चित्रकारः शिल्पी इति । मुखद्वारे स्थितं चित्रं ममापि प्रियम् एव । यस्य शिल्पिनः प्रस्तावः भवता कृतः तस्य काचित् महती कथा अस्ति । ताम् अद्य श्रावयिष्यामि'' इति ।

अनन्तरं तेन कथा आरब्धा -

''सञ्चाररतानां संन्यासिनां कश्चन गणः

पूर्वं कदाचित् वातापिनगरम् आगच्छत् । तेन सह कश्चन चतुर्दशवर्षीयः बालकः अपि आगतवान् । सः गणपतिमन्दिरे एव वासं कृतवान् ।

सः स्वस्य नामधामादिकं न जानाति स्म । तस्य ललाटे कश्चन महान् व्रणकिणः दृश्यते स्म, यस्य च दर्शनात् भासते स्म यत् व्रणस्य कारणतः एषः स्मृतिहीनः जातः अस्ति इति । सः सम्भाषणम् आधिक्येन न करोति स्म । भित्तौ चित्राणि लिखन् भवति स्म सदापि । मण्डपस्थासु शिलासु चित्रं लिखतः तस्य मुखं सदा आनन्दपूर्णं भवति स्म । अतः जनाः तं 'चित्रानन्दः' इति वदन्ति स्म । सः सदा विघ्नेश्वरस्य चित्राणि एव रचयन् भवति स्म इत्यतः 'विघ्नेश्वरचित्रकारः' इत्यपि तस्य नाम आसीत् । 'विचित्रः' इत्यपि तं निर्दिशन्ति स्म जनाः । अन्ततः 'विचित्रः' इति नाम एव तस्य स्थिरं जातम् ।

एतावता गजाननपण्डितः महावृद्धः जातः आसीत् । सः प्रतिदिनं सायं स्वगृहे एव बालान् विघ्नेश्वरकथां श्रावयन् भवति स्म । या कथा श्रुता तत्सम्बन्धि चित्रम् अनन्तरदिने भित्तौ चित्रितं भवति स्म ।

गजाननपण्डितः विचित्रे विशेषवात्सल्यं वहति स्म । विचित्रं गजाननपण्डितः वदति स्म – 'अन्तः आगत्य उपविशतु' इति । किन्तु विचित्रः वदति स्म – ''पण्डितवर्य ! अत्र उपविश्य कथायाः श्रवणात् मम मनसि भानं भवति यत् भवान् माम् एकम् एव उद्दिश्य कथां श्रावयन् अस्ति इति । अतः अहम् अत्रैव उपविशामि'' इति । विचित्रस्य चित्राणि



दृष्ट्वा गजाननपण्डितः महान्तम् आनन्दं प्राप्नोति स्म । अतः सः तम् उद्दिश्य अन्याः अपि विघ्नेश्वरसम्बन्धिनीः कथाः श्रावयति स्म ।

विचित्रं सदा अनुसरन्ति स्म बहवः बालाः । तदीयं चित्रं निर्निमेषं दृष्ट्वा ते प्रसन्नाः भवन्ति स्म । केचन स्वप्रतिभानुसारं लघूनि चित्राणि अपि रचयन्ति स्म । एतेन क्रमेण ग्रामे बहवः बालाः चित्रकलायां निपुणाः सञ्जाताः ।

विचित्रः आदिनम् अङ्गारेण अन्येन वस्तुना वा भित्तिषु चित्रं लिखन् समयं यापयति स्म । मन्दिरे यः प्रसादः वितीर्यते तं खादित्वा सः स्वस्य उदरं पूरयति स्म । रात्रौ मन्दिरस्य सोपानेषु, ग्रामस्य कस्यचित् गृहस्य पुरतः वा शयनं करोति स्म ।

सः आधिक्येन यत्र शेते तत्प्रदेशे चर्मकाराः, कुम्भकाराः इत्यादयः निम्नजातीयाः



एव वसन्ति स्म प्रायः । तत्रत्याः सर्वे विचित्रं प्राणेभ्यः अपि प्रियतमं भावयन्ति स्म । रात्रौ यदाकदाचित् सः आगच्छति चेदपि ते तस्मै भोजनं यच्छन्ति स्म, शयनाय व्यवस्थां कुर्वन्ति स्म च ।

एवं विचित्रः प्रौढः जातः । यद्यपि विचित्रः स्वबान्धवानां विषये किमपि न जानाति स्म, तथापि तदीयाः मातापितृभ्रातृभगिन्यः तु इदानीम् अपि जीवन्ति स्म एव ।

वातापिनगरात् अनतिदूरे स्थिते कस्मिंश्चित् ग्रामे मध्यमपरिवारे विचित्रस्य जन्म जातम् । पितुः प्रेरणया सः बाल्यकाले एव चित्रलेखनम् आरब्धवान् । एतत् असहमानौ भ्राता भ्रातृजाया च तं गृहात् निष्कासितवन्तौ । बाल्यात् एव विचित्रः विघ्नेश्वरे भक्तिं वहति स्म । सः वातापिनगरं प्रति प्रस्थितवान् । मार्गे कुत्रचिदपि तेन आहारः कोऽपि न लब्धः । अतः नितरां श्रान्तः सः कुत्रचित् शिलायाः उपरि अपतत् मूर्च्छां प्राप्य । तत्समये आगतः कश्चन संन्यासिनां गणः तम् अरक्षत्, वातापिनगरं प्रति अनयत् च । एषा तस्य बाल्यसम्बद्धा कथा ।

कदाचित् वातापिनगरे विनायकचतुर्थीनिमित्तिका प्रदर्शिनी आयोजिता ।

प्रदर्शिन्यां स्पर्धा अपि आयोजिता आसीत् । पुरुषप्रमाणिका मूर्तिः कलाकारैः निर्मातव्या आसीत् । 'सा मूर्तिः कलाशास्त्रानुगुणा स्यात्, रमणीयैः वर्णैः उपेता च स्यात्' इति नियमः आसीत् । आगतासु श्रेष्ठां मूर्तिं चित्वा नव दिनानि उत्सवस्य आचरणं करणीयम् इति प्रबन्धकसमितिः चिन्तितवती आसीत् । यस्य मूर्तिः उत्कृष्टत्वेन निर्णीयते तस्मै सहस्रं स्वर्णमुद्रिकाः दास्यन्ते इत्यपि तया समित्या घोषितम् आसीत् । नगरपालिकया घोषितम् आसीत् यत् तस्मै शिल्पिने रत्नखचितं स्वर्णकङ्कणं पुरस्काररूपेण दास्यते इति ।

एतस्यां प्रदर्शिन्यां भागवहनाय आस्थानशिल्पिनः अन्ये कलाकाराः च अमूल्यान् वर्णान्, वर्णमयशिलाः, सुवर्णं च आनाय्य प्रतिमाः निर्माय प्रदर्शनमण्डपे स्थापितवन्तः ।

कश्चन कुम्भकारः विचित्रस्य सुहृत् आसीत् । विचित्रस्य कथनस्य अनुसारं तेन मृत्तिकया विघ्नेश्वरमूर्तिः निर्मिता । विचित्रः सुधा, मृत्तिका, पर्णरसः इत्यादीन् उपयुज्य वर्णान् निर्माय तैः वर्णैः तां मूर्तिम् सम्यक् अलङ्कृतवान् ।

किन्तु अन्ये शिल्पिनः प्रदर्शनमण्डपे तस्याः मूर्तेः स्थापनं निराकृतवन्तः । विचित्रः

व्यवस्थापकान् निवेदितवान् – ''महाशयाः ! सर्वाभिः प्रतिमाभिः सह मम मूर्तेः अपि प्रदर्शनं भवतु । एतदर्थम् अनुमतिः दातव्या इति मम प्रार्थना । अहम् अपि श्रद्धया भक्त्या च यथाशक्ति विघ्नेश्वरस्य प्रतिमां निर्मितवान् अस्मि । मदीया अपि प्रतिमा अन्यप्रतिमानां पङ्क्तौ स्थिता द्रष्टव्या इति मम इच्छा । कृपया एतदर्थम् अनुज्ञा दीयताम्'' इति ।

किन्तु प्रमुखाः शिल्पिनः – ''भवतः नाम-धामादिकं न ज्ञायते । भवतः का जातिः इत्यपि न ज्ञायते । नीचजातेः जनानां वसतौ वासः भवतः । तेषाम् एव सहवासः अपि । एतादृशेन भवता निर्मिता प्रतिमा प्रतिष्ठितैः शिल्पिभिः निर्मितानां प्रतिमानां मध्ये कथं वा अवकाशं प्राप्नुयात् ? तादृशी योग्यता नास्ति भवतः'' इति वदन्तः प्रदर्शनमण्डपे तदीयायाः प्रतिमायाः स्थापनं निराकृतवन्तः ।

एतत् श्रुतवता विचित्रेण महती निराशता प्राप्ता । तदा मित्रेण कुम्भकारेण विचित्रं समाश्वासयता उक्तम् – ''प्रदर्शिनीमण्डपे भवतः प्रतिमायाः स्थापनार्थम् अनुज्ञा न दत्ता चेत् किमर्थं चिन्ता करणीया ? प्रदर्शिनी-मण्डपे भवत्प्रतिमायाः स्थापनं निराकुर्वन्तु नाम ते । वयं भवतः मूर्तिम् अन्यत्र कुत्रचित् स्थापयित्वा प्रदर्शनं करवाम । भवान् चिन्तां मा करोतु'' इति ।

ततः प्रदर्शनशालायाः अनतिदूरे कदली-वृक्षाणां समूहस्य अधः विचित्रस्य प्रतिमा



स्थापिता । विचित्रः अपि प्रतिमायाः पार्श्वे उपविष्टवान् ।

जनाः प्रदर्शिनीं द्रष्टुम् आगताः । धनिकजनाः प्रतिष्ठितजनाः च बहवः तत्र आगताः । ते शिल्पिभिः उपयुक्तस्य वर्णस्य मूल्यं, शिल्पिनः कलाचातुर्यं, तस्य जात्यादिकं च प्रशंसन्तः आसन् । किन्तु सर्वे बालाः विचित्रेण निर्मितायाः प्रतिमायाः समीपे एव स्थितवन्तः आसन् । ते महता कुतूहलेन तां प्रतिमां पश्यन्ति स्म ।

एतस्मिन् एव समये आकाशात् अवतीर्णे विद्युल्लते इव उभे कन्यके प्रदर्शनशालाम् आगते । तयोः नेत्रे कान्त्या विलसतः स्म । शरीरं च विविधैः रत्नाभरणैः विभूषितम् आसीत् ।

जनाः ते दृष्ट्वा आश्चर्यचकिताः जाताः । तदा तयोः ज्येष्ठा तरुणी - ''आवां कलानन्दनगरस्य निवासिन्यौ । या प्रतिमा आवाभ्यां रोचते तस्याः निमत्रि आवां सहस्रं स्वर्णमुद्रिकाः पुरस्काररूपेण दास्यावः'' इति वदन्ती स्वस्य हस्ते स्थितं नाणकस्यूतं कम्पयित्वा मधुरं झणत्कारं जनितवती ।

तत्समनन्तरम् एव सर्वे शिल्पिनः आत्मना निर्मितायाः प्रतिमायाः पार्श्वे गत्वा स्थितवन्तः ।

''मम अग्रजा प्रसन्नवदना महागायिका । सा खाद्यप्रिया अपि । नैवेद्यपुष्टिः, प्रतिमापुष्टिः, गात्रपुष्टिः इति पुष्टित्रयम् इच्छति सा । तस्याः गानमाधुर्यं तु श्रवणादेव अवगन्तव्यं, न तु वर्णनात्'' इति उक्तवती अनुजा ।

''मम अनुजा एषा मोहना वाचाला । सा श्रेष्ठा नर्तकी अपि । दर्शनात् भासते यत् एषा नितरां कृशकाया इति । किन्तु महाकायां माम् अपि लीलया उन्नीय भ्रामयितुं सामर्थ्यम् अस्ति तस्याः । एतस्याः नृत्यकौशलम् अपि दर्शनात् एव अवगन्तव्यम्'' इति अवदत् प्रसन्नवदना ।

''आवयोः नृत्यं गानं च न इन्द्रसभायां प्रचलेत्, न वा कुबेरस्य आस्थाने । या विघ्नेश्वरप्रतिमा आवयोः कृते रोचते तस्याः एव पुरतः आवयोः नृत्यं गीतं च भवितुम् अर्हति'' इति अवदत् मोहना ।

तयोः कथनं श्रुत्वा जनाः ततः निर्गतवन्तः । ते तरुण्यौ अग्रे गतवत्यौ ।

- *(अग्रिमसञ्चिकायां समाप्तिः)*





# सज्जनतायाः महिमा

विष्णुस्वामी रामपुरस्य निवासी। यदा तदीयाः पुत्राः अल्पवयस्काः आसन् तदा कृष्णपुरस्य भूस्वामी तस्मै वासाय गृहं कृष्यार्थं क्षेत्रं च दत्तवान् । अतः विष्णुस्वामी कृष्णपुरे एव वासम् अकरोत् ।

इदानीं तस्य पुत्र्यौ प्राप्तवयस्के स्तः । तयोः विवाहः अपि जातः अस्ति । ताभ्याम् उत्तमम् एव पतिगृहं प्राप्तम् अस्ति । तस्य एकमात्रपुत्रः माधवः अपि इदानीं प्राप्तवयस्कः जातः अस्ति ।

पिता यथा तथैव माधवः अपि श्रेष्ठः विद्वान् । सौम्यः सुशीलः चापि सः । तस्मात् तस्मै कन्यां दातुं बहवः कन्यापितरः उत्सुकाः जाताः ।

कदाचित् विष्णुस्वामिनः पत्नी महालक्ष्मीः पुत्रम् अवदत् – ''वत्स ! बहवः जनाः स्वपुत्रीं भवते दातुम् उत्सुकाः सन्तः गृहम् आगच्छन्तः सन्ति । एतद्विषये मया कश्चन अंशः वक्तव्यः अस्ति । भवान् जानाति एव यत् वयं पूर्वं रामपुरे वसामः स्म इति । तदा भवान् अल्पवयस्कः आसीत् '। अस्माकं गृहस्य पार्श्वे रामशास्त्रिवर्यः वसति स्म । तस्य पञ्च पुत्र्यः । लक्ष्म्याः सरस्वत्याः वा कृपादृष्टिः तस्मिन् न आसीत् । अतः वयं तदा तदा तस्य साहाय्यं कुर्मः स्म । तस्य तृतीया पुत्री श्रीदेवी पञ्चवर्षीया आसीत् । सा सुन्दरी आसीत् । सर्वदा अस्मद्गृहम् आगत्य क्रीडन्ती भवति स्म । तस्याः वचनानि मधुराणि भवन्ति स्म । 'मम स्नुषा' इति वदन्ती ताम् अहम् आलिङ्गामि स्म । स्वपुत्रीम् इव अहं तां प्रीत्या पश्यामि स्म । यदा कृष्णपुरं प्रति प्रस्थितं तदा अस्मद्वियोगं स्मरन्ती रामशास्त्रिणः पत्नी नितरां दुःखिता जाता । तां सान्त्वयन्ती अहं तदा उक्तवती आसम् – 'इतः अस्माकं गमनात् परस्परसम्बन्धः छिन्नः इति मा भावयतु । श्रीदेवीम् अहं मम स्नुषां करिष्यामि । भवती चिन्तां मा करोतु' इति । भवतः पिता अपि अत्र सहमतिं दर्शितवान् आसीत् । एषा पूर्वतनी



कथा । तथापि दत्तं वचनं पालनीयम् एव खलु ? अतः अन्यासां कन्यानां दर्शनतः पूर्वं रामपुरस्य कन्यां भवान् पश्यति चेत् वरम्'' इति ।

मातुः वचनं श्रुत्वा माधवः आश्चर्येण स्तब्धः अभवत् । सः मन्दस्वरेण मातरम् अवदत् - ''अम्ब ! वचनं दत्तम् इत्येतत् पूर्वम् एव भवती यदि माम् अवदिष्यत् तर्हि वरम् अभविष्यत्'' इति ।

एतस्य श्रवणात् महालक्ष्मीः अवगतवती यत् मया सूचितः सम्बन्धः पुत्राय न अरोचत इति । ''वत्स ! किमर्थम् एवम् उच्यते भवता ?'' इति पुत्रं पृष्टवती सा ।

तदा माधवः अवदत् - ''अम्ब ! अस्माकं परिवारः विदुषाम् । एतत् गृहं स्नुषात्वेन या आगमिष्यति सा अपि यदि विदुषी भवेत् तर्हि वरम् । कदाचित् आस्थानपण्डितः रामशर्मा मम पुरतः स्वपुत्र्याः शारदायाः परिणय-प्रस्तावम् उपस्थापितवान् । तदा मया निराकृतिः न दर्शिता । एतस्य तात्पर्यम् एतत् न यत् मया तस्य पुरतः अङ्गीकारवचनम् एतावता एव उक्तम् इति । दीपावलीसमये सः अत्र आगमिष्यति । तदा एतं विवाहप्रस्तावं भवतोः पुरतः उपस्थापयिष्यति सः'' इति ।

एतत् श्रुत्वा महालक्ष्मीः मौनेन स्थितवती । राजधान्यां प्रवृत्तायां विद्वत्सभायां भागम् ऊढ्वा विजयीभूय प्रत्यागच्छन् माधवः शारदाम् अपि हृदयेन वहति स्म । रामशर्मा आस्थानविद्वान् । तस्य पुत्री शारदा अपि विदुषी एव । एतस्मिन् वर्षे प्रवृत्तायां विद्वत्सभायां शारदा सर्वान् विदुषः पराजितवती आसीत्, ऋते माधवात् । माधवः तां पराजितवान् आसीत् । माधवम् अभिनन्दन् रामशर्मा - 'मद्गृहम् आगच्छतु' इति निमन्त्रितवान् आसीत् ।

मातुः मुखस्य कान्तिहीनतां दृष्ट्वा माधवः अवदत् - ''अम्ब ! भवत्या मद्विषये अन्यथा-भावः न प्राप्तव्यः । विवाहविषये मया स्वातन्त्र्येण व्यवहृतम् इति न चिन्तनीयं भवत्या । यत् प्रवृत्तं तत् निवेदितं मया । भवतोः विषये मम सा एव श्रद्धा अस्ति, या च पूर्वम् आसीत् । अतः मम विवाहविषये अन्तिमनिर्णयः तु भवतोः एव भविष्यति । मम हितं मनसि निधाय एव भवन्तौ निर्णयं करिष्यतः इत्यत्र मम पूर्णः विश्वासः अस्ति'' इति ।



तदा दीर्घं निश्श्वस्य महालक्ष्मीः अवदत् - ''अस्तु तावत् । भवान् प्रवृत्तं सर्वं पितरम् अपि वदतु । यथोचितं निर्णेष्यति सः एव'' इति ।

विष्णुस्वामी पुत्रेण उक्तं श्रुत्वा अपि कमपि निर्णयं प्राप्तुं न शक्तवान् ।

मातामित्रोः मनसः स्थितिं दृष्ट्वा माधवः मातरम् अवदत् - ''अम्ब ! भवत्या रामशास्त्रिणे यथा वचनं दत्तं तथा मया तु रामशर्मणे किमपि वचनं न दत्तम् । अतः श्रीदेवीं पश्याम तावत्'' इति ।

उत्तमे मुहूर्ते विष्णुशर्मा, महालक्ष्मीः, माधवश्च रामपुरं गतवन्तः ।

आकस्मिकतया आगतान् एतान् त्रीन् दृष्ट्वा रामशास्त्री तत्पत्नी च नितरां सन्तुष्टौ । ताभ्यां महता आदरेण तयोः सत्कारः कृतः । कुशलप्रश्नानाम् अनन्तरं आगमनोद्देशः विचारितः । कन्यां श्रीदेवीं द्रष्टुम् एते आगताः इति यदा ज्ञातं तदा तु तौ नितरां खिन्नौ ।

किञ्चित्कालानन्तरं खेदमिश्रितेन स्वरेण रामशास्त्री अवदत् - ''विष्णुस्वामिवर्य ! बहोः कालात् पूर्वं दत्तं वचनं स्मृत्वा भवान् एवं मम गृहम् आगच्छेत् इति मया स्वप्ने अपि ऊहितं न आसीत् । भवतः सज्जनतायाः लाभं प्राप्तुं मया न शक्तं किल इति विषीदामि अहम् ! श्रीदेवी यदि इदानीम् अस्मत्समीपे स्यात् तर्हि झटित्येव कन्यादानं कृत्वा कृतार्थः खलु अभविष्यम् !!'' इति ।

एतत् श्रुत्वा विष्णुस्वामी आश्चर्येण पृष्टवान् - ''श्रीदेवी कुत्र अस्ति ? क्व गता सा ?'' इति ।

तदा रामशास्त्री अवदत् - ''भवन्तः एतं ग्रामं त्यक्तवन्तः खलु ? ततः मासानन्तरं सन्तानप्राप्तये पूजां कारयितुं निस्सन्तानः कश्चन पण्डितः सपत्नीकः अस्मद्ग्रामस्थं रङ्गनाथस्वामिमन्दिरम् आगतवान् । स च घर्मकालः आसीत् । मन्दिरात् प्रत्यागच्छन्तौ तौ दम्पती घर्मपीडां सोढुम् अशक्नुवन्तौ मम गृहस्य पुरतः स्थितस्य निम्बवृक्षस्य अधः उपविष्टवन्तौ विश्रान्त्यर्थम् । तयोः दयनीयां दशां दृष्ट्वा वयं तौ गृहं प्रति निमन्त्रितवन्तः । अत्रान्तरे तस्य पण्डितस्य पत्नी हिक्कां कुर्वती मूर्च्छां गतवती । पत्न्याः श्रीदेव्याः च साहाय्येन सा अन्तः नीता । ग्रामस्य उत्तमवैद्यम् आनाय्य तस्याः चिकित्सा कारिता । सप्ताहं यावत् चिकित्सा प्रवृत्ता । तत्समये श्रीदेवी तस्याः पण्डितपत्न्याः

सेवां कृतवती । एतदनन्तरं पण्डितपत्नी स्वस्था जाता । एतदवसरे एव उभयोः अपि परिवारयोः परस्परस्नेहः प्रवृद्धः'' इति ।

'' एतत् अस्तु नाम । श्रीदेव्याः किं जातम् इति तु भवता न उक्तम्'' इति अवदत् विष्णुस्वामी ।

''तस्यैव कथनाय एषा पीठिका । सः पण्डितः श्रीदेवीं स्वपार्श्वे एव उपवेश्य तस्याः शिरसि प्रीत्या हस्तं स्थापयन् - 'मम तु भासते यत् रङ्गनाथस्वामी अस्मासु कृपादृष्टिं प्रसारितवान् अस्ति इति । सर्वगुणसम्पन्ना षड्वर्षीया पुत्री प्रसादरूपेण दत्ता तेन । एतां वयं दत्तकरूपेण स्वीकरिष्यामः । किम् एतत् अनुमन्येत भवद्भिः ?' इति अपृच्छत् । एवं पृच्छतः तस्य पण्डितस्य नेत्राभ्याम् अश्रूणि पतन्ति स्म । तस्य कथनानुसारं व्यवहारेण श्रीदेव्याः जीवनम् उत्तमं भविष्यति इति चिन्तयन्तौ आवां हृदयं पाषाणीकृत्य तदीयं प्रस्तावम् अङ्गीकृतवन्तौ'' इति अवदत् रामशास्त्री ।

''श्रीदेवीं दत्तकरूपेण स्वीकृतवान् सः पण्डितः कः ?'' इति विष्णुस्वामी माधवश्च युगपत् पृष्टवन्तौ ।

तदा रामशास्त्री अवदत् - ''तस्य नाम रामशर्मा इति । दत्तकरूपेण श्रीदेव्याः स्वीकारस्य अनन्तरं तेन राजादरः प्राप्तः । दत्तकस्वीकारसमये सः स्वस्य अभिरुचेः अनुगुणं श्रीदेव्याः नाम शारदा इति परिवर्तितवान्'' इति ।

रामशास्त्रिणः वचनं श्रुतवतां विष्णुस्वामिनः, तत्पत्न्याः, पुत्रस्य च सन्तोषः वर्णनातीतः । विष्णुस्वामिनः मुखात् पूर्णं विवरणं ज्ञात्वा रामशास्त्रिपरिवारजनाः अपि महान्तम् आनन्दं प्राप्तवन्तः ।

एतदनन्तरं मासद्वयाभ्यन्तरे माधवस्य शारदायाः च विवाहः सम्पन्नः । दम्पत्योः आशीर्वादं कुर्वन् रामशर्मा विष्णुस्वामिनम् अवदत् - ''शुद्धेन मनसा क्रियमाणस्य कार्यस्य कीदृशः महिमा इति ज्ञातं खलु भवता ? रङ्गनाथस्वामी भवतः सर्वान् रामपुरम् आनाय्य चमत्कृतिम् एव कृतवान् । एतस्मात् महालक्ष्म्याः इच्छा अपि पूर्णा, माधवस्य अभिलाषः अपि सफलतां गतः । एषः एव अस्ति सज्जनतायाः महिमा'' इति ।



# दलपतेः अभिप्रायः

अनन्तवर्मा सौवीरदेशस्य शासकः । चन्द्रपालः तस्य अश्वसेनायाः दलपतिः ।

प्रतिवेशिराज्यैः सह सदा युद्धं करणीयं भवति स्म सौवीरदेशेन । तेषु युद्धेषु चन्द्रपालः शत्रूणां विमर्दने प्रत्याक्रमणकरणे च महत् कौशलं दर्शयति स्म । अतः एव सौवीरराज्यस्य आक्रमणे भीतिं दर्शयन्ति स्म शत्रुराजाः ।

चन्द्रपालः वृद्धः जातः । सः निवृत्तिं स्वीकर्तुम् ऐच्छत् ।

कदाचित् सः राजानं प्रार्थितवान् - ''महाराज ! कृपया निवृत्त्यर्थं मह्यम् अनुज्ञा दातव्या'' इति ।

तदा राजा अवदत् - ''चन्द्रपाल । भवतः प्रार्थना अङ्गीक्रियते मया । अहं चिन्तयामि यत् गौरीनाथः अग्रिमः दलपतिः भवितुम् अर्हः इति । एतद्विषये भवतः अभिप्रायः कः ?'' इति ।

''एतदर्थं निश्चयेन गौरीनाथः योग्यः । सः शौर्येण माम् अपि अतिशेते'' इति अवदत् चन्द्रपालः ।

तदा पार्श्वे उपविष्टः मन्त्री अवदत् - ''किन्तु गौरीनाथः भवद्विषये उत्तमम् अभिप्रायं न वहति खलु ?'' इति ।

''महाराजः गौरीनाथविषये मम अभिप्रायं ज्ञातुम् इष्टवान् । सः निवेदितः मया । मद्विषये तस्य अभिप्रायः कः इति तु तेन ज्ञातुं न इष्टम् । तस्य का प्रसक्तिः अत्र ?'' इति शान्ततया अवदत् चन्द्रपालः ।



कुतन्त्रप्रयासं ज्ञातवान् राजा शान्तिदेवः पत्नीपुत्रौ सुरङ्गमार्गेण प्रेषयति । सेनापतेः वीरसिंहस्य जनाः तस्य उपरि आक्रमणं कुर्वन्ति । किन्तु राजा स्वरक्षणं करोति ।.....

# आर्यः

## राजकुमारस्य अज्ञातं रहस्यम्

Art : Gandhi Ayya

उपरि आगच्छतः शत्रून् निवारयति राजा । सः निश्रेण्याः ऊर्ध्वभागे स्थितं जनं पातयति । तेन निश्रेणी अपि पतति ।

भवान् वीरसिंहः !

भवान् सजीव गन्तुं न अर्हति ।

यदि शक्येत तर्हि एतत् सह्यताम् ।

तं रुन्धन्तु ।

राजा भवनात् उत्कूर्दति ।

वीरसिंहस्य सैनिकानां खड्गेभ्यः शूलेभ्यः च आत्मानं रक्षन् सः अग्रे धावति ।

नदीतीरे स्थितां दुर्गभित्तिं सः आरोहति ।

ततः नद्याम् उत्पतति सः ।

सः निश्चयेन निमज्जेत् ।




तस्मिन् एव काले राज्ञी हस्तदीपस्य साहाय्येन गुप्त-मार्गस्य द्वारस्य प्राप्त्यर्थं प्रयासं कुर्वती अस्ति ।







सुरङ्गस्य शिलामय्यः भित्तयः रूक्षाः सन्ति । राज्ञी मन्दया गत्या पदानि स्थापयति । एतदभ्यन्तरे कयाचित् शिलया घट्टिता सा पतति । आत्मनः समतोलनाय सा प्रयासं यदा कुर्वती आसीत् तदा हस्तस्थः दीपः पतति ।






राज्ञी एकं फलकम् अपनयति । सुरङ्ग-मार्गस्य समाप्तिः अत्र एव इति निश्चिनोति सा ।



सा तत् फलकं पुनरपि यथास्थानं स्थापयति । परिवृत्य स्वपुत्रम् उन्नेतुम् इच्छति, यश्च चङ्क्रमणं कुर्वन् दूरं गतः अस्ति ।








श्रान्तिकारणतः राज्ञी मूर्च्छिता भवति ।



वत्सः ! कस्य स्यात् एषः बालकः ?

स्वामी जयानन्दः प्रातः स्नानपूजादि-निमित्तं बहिः आगच्छति ।




(अनुवर्तते)

# कालोऽयं विनोदस्य

## वर्णैः अलङ्क्रियतां चित्रम्

महेशः पारावातम् एकं विमोचयन् अस्ति । किं भवन्तः तत् चित्रं पुनः स्रष्टुं शक्नुवन्ति ? सरलम् इति वदन्ति किम् ? भवतु, नियमः अस्ति यत् एतत् समग्रं चित्रं स्थगनं विना, तन्नाम अङ्गुल्याः उन्नयनं विना, एव लेखनीयम् इति । यत्यतां तावत् ।

I



## उपकारः क्रियतां चटकायाः

'चिक्कि'नामिका चटका बहु खिन्ना अस्ति । तस्याः शिशुः 'टिप्पा' नीडे एतस्याः प्रतीक्षां कुर्वन् अस्ति। परन्तु बहुधा प्रयत्नेन अपि सा मार्गं ज्ञातुं शक्ता न जाता । नीडं प्रति गमनाय किं भवन्तः तस्याः साहाय्यं कुर्वन्ति ?

II

## भेदाः अभिज्ञायन्ताम्

दक्षिणपार्श्वे दत्ते द्वे चित्रे समाने दृश्येते। परन्तु ते समाने तु न। जागरूकतया यदि अवलोक्यते तर्हि षट् भेदाः दृश्यन्ते। तान् किं भवन्तः अभिज्ञातुं शक्नुवन्ति ?

(उत्तराणि ६६ तमे पृष्ठे)





III

## वर्णलेपनविनोदः

स्वाङ्कीनामिका बका, तस्याः पुत्री च 'सिग्नुसिग्नेट्'मेलां द्रष्टुं प्रस्थिते स्तः अतिरम्यं शिरस्त्रं धृत्वा। भवन्तः अत्युत्तमैः वर्णैः एतत् चित्रम् अलङ्कुर्वन्तु अवधानपूर्वकम्।

IV



# चित्रशीर्षिकास्पर्धा



**अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



SOURAA



SOURAA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्व प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'सप्टम्बर्'मासस्य चित्रशीर्षिकाप्रेषिका -**

**चुण्डि शुभश्रीः**

*द्वारा - पन्तुलसुब्बाराव्, ८१, अजरेकर् चाळ्*
*विजापुरम् - ५८६ १०१, कर्णाटकम्*

### पुरस्कृता शीर्षिका





**श्रीमतां गृहस्य भूषणम् आसीत् दूरभाषा**
**फलापणेऽपि सामान्या जाता जङ्गमदूरभाषा**

---

**मनोविनोदस्य उत्तराणि - (पृ. १२,१३)**

## भेदाः अभिज्ञायन्ताम्

१. अश्वस्य दक्षिणकर्णः न दृश्यते । २. अश्वशरीरस्थं वर्तुलं न दृश्यते । ३. अश्वस्य दक्षिणपादस्थः खुरः अन्यः । ४. शकटस्थाः रेखाः न्यूनाः । ५. शकटचक्रधारणाय योजिता आणिः न दृश्यते ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam



# FOR MOTHERS
## A CONTEST WITH A DIFFERENCE !

**THEME :**
**A TRUE INCIDENT IN THE EARLY YEARS ( 6-9 ) OF HER CHILD**

**One 1st Prize : Endowment for Rs.10,000**

**Two 2nd Prizes : Endowment for Rs. 5,000 each**

**Prize : Educational endowment in the name of the child in the form of National Savings Certificate**

**Closing Date :**

**Extended by popular request to November 15**

*Instructions :*

● Entries are invited in English. ● Only one entry per participant. ● Length, not exceeding 500 words. ● Write on one side of the paper. ● Only entries written in legible hand will be accepted. ● Attach photograph of mother and child. ● Coupon alongside to accompany entry. ● Enclose your entries with the coupon that appears in Junior Chandamama Oct/Nov issue. Entries without coupons will not be entertained. ● Editor's decision is final. No correspondence on this will be entertained. ● Entries should reach Chandamama India Ltd., 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097.

**Look for entry form in**

**Junior CHANDAMAMA**



**November 2003 issue**

